# प्रस्तावना ।



ज्योतिषशास्त्रस्य फलितग्रन्थेषु बृहज्जातकनामाऽयं ग्रन्थः कीदृशो गम्भीराशयः कीदृशश्चोपकारक इति नाऽविदितं किल विचारशीलनिखिलज्योतिर्विदामिति विशेषपरिचयप्रदानश्रमाऽनवसरः । अनेनैकेनैव ग्रन्थेनाऽखिलजातकविषयविज्ञतामुपलभ्य त्रिकालदर्शिभूयमनुभवेयुर्गणकगणा इति मनसि निधाय श्रीवराहमिहिराचार्येण होराशास्त्रपयोधिनिर्मन्थनोद्धृतसारसद्रत्नानामस्मिन्ग्रन्थे कया युक्त्या निवेशः कृत इति न साधारणधियामवधारणविषयः । यद्यप्यनेकदैवज्ञदोपज्ञैरेतदाशयविशदीविधित्सया भाष्याणि टीकाश्च व्यरच्यन्त, परं पूर्णतयैतदाशयप्रकाशनयशोऽनुभवितुं न भाग्यभाक्त्वं तेषाम् । तत्र मधुसूदनी-भट्टोत्पलीभ्यां चावश्यमुपकृताः कृतिनो दैवज्ञा यावच्छक्यमतिदुरूहैतदर्थप्रकाशनसफलप्रयासेन । परमुत्तानार्थतोऽयमन्यो गूढाभिप्रायो ग्रन्थकर्तुरिति कथनगौरवं नानुभूतमाभ्यामपि ।

सन्तु चानेकशो धन्यवादास्तस्मा अविज्ञातनामधेयमहोदयाय, येन चैषा दशाध्यायी ( नौका ) नामधेया टीका निरमायि । यत्र च मूलाक्षरत एवाऽनेकेऽर्था ग्रन्थान्तरप्रमाणप्रदर्शनपुरस्सरं निस्सार्य प्रदर्शिताः । यथास्थलं विविधफल प्रश्नशकुन-योगाभ्यास-कलाकौशल-कामकेल्यादयोऽपिमूलाक्षरैरेव प्रकटिताः,यदनुसारतः फलकथनेन च ज्योतिषशास्त्रगौरवं गणकगुणगरिमा च निखिलनराणां श्रद्धेयतामाप्नोति । दर्शनतो विद्वद्भिरेवेयं प्रशंसनीया भविष्यतीति विरम्यत एवैतत्कर्मणः ।

सा चैषा कुत्राप्यमुद्रितत्वाल्लुप्तप्राया मया चिरायाऽधिकश्रमत एकां प्रतिमतिप्राचीनां जीर्णां घुणाऽऽपूर्णनामुपलभ्याऽति कठिनतया संशोध्य क्षेमराज-श्रीकृष्णदासश्रेष्ठिने मुद्रणाय सर्वाधिकारसहिता सप्रेम समर्पिता । तेन च दशाध्यायीटीकासहितमेतद्बृहज्जातकं स्वकीये "श्रीवेङ्कटेश्वर" ( स्टीम् ) मुद्रणयन्त्रालये सुव्यवस्थया शीशकोत्तमाक्षरैः पुष्टमसृणपत्रेषु मुद्रयित्वा प्रकाशितम् । अतोऽन्यः कश्चिदस्य मुद्रणादिसाहसं न कुर्यान्नोचेद्धानिरेव तस्य ।

यद्यप्यतीवसावधानतया शोधनमकारि, परमादर्शपुस्तकान्तराभावाद्यत्र कुत्राऽपूर्णता दृष्टा तत्रैवं "" विन्दुविन्यासः कृतः। संशये प्रायः प्रश्नचिह्न (?) निधापनमपि । यदि केषामपि विदुषामन्तिक एतत्पुस्तकं चेत्तेऽवश्यमनुकम्पया प्रेषयेयुः पत्रद्वारा व्यवहरेयुर्वा, यतोऽन्यावृत्तावशेषशोधनतामनुव्रजेदिति । संप्रति चैतद्ग्रहणपठनपाठनाद्भुतफलकथनादिभिरनुगृह्णन्तु मामनुग्राहका ग्राहका विद्वांस इति भृशमभ्यर्थयते—

विद्वदनुकम्पाभिलाषी—

ज्योतिर्विद् पं॰ हनुमान् शर्मा,

( जयपुर सिटी. )

॥ श्रीः ॥

# अथ दशाध्यायीटीकोपेतबृहज्जातक-विषयानुक्रमणिका।



इति कर्माजीवाध्यायः१०.

इति दशाध्यायी ( नौका ) टीकोपेतबृहज्जातकविषयानुक्रमणिका ।



॥ श्रीः ॥

# अथ बृहज्जातकम्.

## दशाध्यायीटीकोपेतम्

( शार्दूलविक्रीडितम् )

मूर्तित्वे परिकल्पितश्शशभृतो वर्त्माऽपुनर्जन्मना-
मात्मेत्यात्मविदां क्रतुश्च यजताम्भर्ताऽमरज्योतिषाम् ।
लोकानाम्प्रलयोद्भवस्थितिविभुश्चानेकधा यः श्रुतौ
वाचं नः स दधात्वनेककिरणस्त्रैलोक्यदीपो रविः ॥ १ ॥

जयति स भगवान्गजास्यो यत्कर्णव्यजनमारुता भजताम् ॥
यान्तो व्यसनानि हरन्त्यायान्तश्चार्पयन्त्यभीष्टानि ॥ १ ॥
सत्यज्ञानपरब्रह्मज्योतिरानन्दरूपिणीम् ॥
नौमि सर्वोत्तरोदात्तप्रश्नमालां सरस्वतीम् ॥ २ ॥
सत्यज्ञानप्रदायेष्टदेशकालप्रबोधिने ॥
नमः श्रीगुरवे साक्षात्परमेश्वरमूर्तये ॥ ३ ॥
येषामात्मनि गर्भसंस्कृतिमुखैर्मौञ्जीनिबन्धान्तिमैः
पूतैः कर्मभिरत्र भाति विधिवद्ब्रह्म प्रतिष्ठापितम् ॥
श्रौतस्मार्तसमस्तकर्मसततानुष्ठाननिष्ठात्मन-
स्तानेतान्प्रणमामि भूमिविबुधानिष्टार्थकल्पद्रुमान् ॥ ४ ॥
श्रीसूर्यादीन्स्वसंवेद्यनिग्रहानुग्रहान्ग्रहान् ॥
जगत्सृष्टिस्थितिलयज्ञानहेतूनुपास्महे ॥ ५ ॥
ज्योतिःशास्त्रमिदं विधाय विपुलं त्रिस्कन्धभिन्नं पुरा
लोकानां मतिमान्द्यतः कलियुगे तत्पातभीत्या पुनः ॥
स्वल्पं तत्सकलं ततो रचितवानादित्यदासात्मजो
भूत्वा यो मिहिरो वराहमिहिरो नाम्ना नमस्कुर्महे ॥ ६ ॥

वराहहोराशास्त्रस्य विज्ञातोऽर्थोऽथ यो मया ॥
स तु शिष्यावबोधार्थं संक्षेपेण विलिख्यते ॥ ७ ॥
श्रीमद्वराहमिहिरहोरातात्पर्यसागरे ॥
सदर्थरत्नसंसिद्ध्यै टीका नौका विचार्यते ॥ ८ ॥

तत्र लोकानुग्रहार्थमतीतानागतवर्तमानकालविषयफलविशेषज्ञानोपायभूतं होराशास्त्रं चिकीर्षुः श्रीवराहमिहिराचार्यः प्रथमम्

"आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम् ।"

इत्युक्तं शिष्टाचारमनुस्मरन्नभीप्सितस्याविघ्नपरिसमाप्तये समुचितेष्टदेवतामाशीर्मुखेन परामृशति-

मूर्तित्व इति ॥ तत्र सप्तविंशतिपदानि । स रविर्नो वाचं विदधात्विति क्रियाकारकसम्बन्धः । स यच्छब्दयुक्तवाक्यसप्तकोक्तगुणविशिष्टः । रविः "रु शब्दे" इत्यस्माद्धातोर्निष्पत्त्या शब्दब्रह्मस्वरूपस्त्रयीमयो भगवानादित्यो रविशब्देनोच्यते । "एतन्मण्डलं खे तपति दिनकृतः ऋचोऽर्चींषि सामानि" इत्यादिभिः सूर्यस्य त्रयीमयत्वम् । अत एव शब्दब्रह्मस्वरूपत्वं च प्रदर्शयता रविशब्देन निर्देशाद्भगवतः श्रीसूर्यदेवस्यादेशप्रधाने जातकशास्त्रे समुचितेष्टदेवतात्वं ध्वन्यते । नोऽस्मभ्यं वाचं प्रार्थ्यत्वेन विशिष्टां वाचमित्यर्थः । वाङ्मात्रस्याप्रार्थनीयत्वात् ।

वाचो वैशिष्ट्यं च यथाकालप्रतिभानम्, अप्रतिहतत्वम्, सत्यत्वं, श्रोत्रमनोहारित्वमित्यादिभिर्गुणैः संयोगः । तादृशीं वाचं दधातु । "डुधाञ् धारणपोषणयोः" इत्यस्मादाशिषि लोट् । दधातु ददातु सम्पादयत्वित्यर्थः । नैकाकिरण इति प्रसज्यप्रतिषेधे नञ् । तथा च भर्तृहरिः-

"प्रसज्यप्रतिषेधोऽसौ यत्रोत्तरपदेन नञ् ।" इति ।

एकाकिरणो नेति योजना । एकप्रकारमेकत्वं तस्मादनेकप्रकारकिरणः । उष्णकिरणः, शीतकिरणश्चेत्यर्थः ।

यानियानि प्रकाशकत्वयुक्तानि वस्तूनि रत्नादीनि तेषां प्रकाशकत्वशक्तिरर्कादेव जायत इत्यर्थः । अत एव त्रैलोक्यदीपस्त्रैलोक्यस्य प्रकाशकत्वाद्दीपभूत इत्यर्थः ।

"प्रकाशकौ द्वौ प्रथमौ ग्रहाणाम् ।"

इत्यादिवचनेषु चन्द्रस्यापि प्रकाशकत्वमुक्तं तत्कथमेवेत्यत्राह-यः शशभृतो मूर्तित्वे परिकल्पित इति । यच्छब्दः सप्तस्वप्यवान्तरवाक्येषु योजनीयः । शशभृतश्चन्द्रस्य मूर्तित्वे-मूर्तित्वशब्देनामूर्तित्वव्यावृत्तिरुच्यते । अमूर्तानामदृश्यत्वं प्रसज्येतऽतस्तस्याप्यमाभूदिति चन्द्रस्य दृश्यत्वकरणे परिकल्पितः सामर्थ्ययुक्तः । इदं व्यक्तमुक्तमाचार्येण संहितायाम्-

"सलिलमये शशिनि रवेर्दीधितयो मूर्च्छितास्तमो नैशम्।
क्षपयन्ति दर्पणोदरनिहिता इव मन्दिरस्यान्तः॥" इति।

सूर्यभटेनाप्युक्तम्–

"चन्द्रो जलमर्कोग्निः" इति।

तस्माज्जलस्वरूपः स्वयंप्रकाशशून्यश्चन्द्रः। सूर्यांशुसंस्पर्शवशाद्दृश्यमूर्तिर्भवतीत्यर्थः। तस्माच्चन्द्रस्य प्रकाशकत्वं रविकृतमेवेति सिद्धम्। तथा योऽपुनर्जन्मनां वर्त्म च भवति। अपुनर्जन्मनां पुनरावृत्तिशून्यानां वर्त्म मुक्तानां गमनभूमिरित्यर्थः। तथा चोक्तम्–

"द्वावेव पुरुषौ लोके सूर्यमण्डलभेदिनौ।
परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः॥" इति।

य आत्मविदामात्मेति तृतीयं वाक्यम्। आत्मानं विदन्तीत्यात्मविदः। क आत्मेति चेत् देहेन्द्रियमनोबुद्धिप्राणेभ्यो दृश्येभ्यो व्यतिरिक्तोऽन्तरतम आकाशवत्सर्वगतः सूक्ष्मो, नित्यो, निरवयवो, निर्गुणो, निरंजनो, गमनागमनादिरहितः, अहंकारममकारेच्छाद्वेषप्रयत्नरहितः, स्वयंज्योतिःस्वभावः, अत्युष्णवत्सवित्प्रकाशवच्चाकाशादिभूतरहितो, बुद्ध्यादिकरणरहितः, प्राणादिवायुभेदरहितः, सत्त्वादिगुणरहितः, अशनपिपासाशोकमोहजरामरणबुद्धिशरीरधर्मरहितो यः सर्वप्राणिहृदि स्थितः, सर्वबुद्धेर्द्रष्टा स आत्मेत्यभिधीयते।

तद्विदां निवृत्तिमार्गनिष्ठानां वेदान्तिकानां सिद्धान्तरूपेण प्रतिपाद्यो य आत्मा तत्स्वरूप इत्यर्थः। यो यजतां क्रतुश्च भवतीति सम्बन्धः। यो यजतां कर्मकाण्डनिष्ठानां गृहस्थानां क्रतुश्च, क्रतुर्हविःसंस्थसोमसंस्थादिभेदैर्बहुविधः, तत्स्वरूपो यजमानानामभीष्टफलदायी क्रतुदेवतास्वरूप इत्यर्थः। तथा योऽमरज्योतिषां भर्ता अमराणां ज्योतिषां च क्रतुषु हविर्भागभुजां क्रतुसम्पादनसाधनभूतधनधान्यवर्धकत्वद्वारेण भर्ता भरणशीलः। तथा चोक्तम्–

"अग्नौ शस्ताहुतिः सम्यगादित्यमुपतिष्ठते।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः॥" इति।

यो लोकानां प्रलयोदयस्थितिविभुश्च भवतीत्यन्वयः। प्रलयोदयस्थितिविभुः प्रलयस्य संहारस्य, उदयस्य सृष्टेः, स्थितेः पालनस्य च विभुः प्रभुः कर्तुमकर्तुमन्यथाकर्तुमपि शक्तः प्रभुरित्युच्यते सांख्यैः। सृष्टिस्थितिसंहारकर्तृत्वेन प्रतिपादित ईश्वरस्तत्स्वरूप इत्यर्थः। यः श्रुतावनेकधायो रविः श्रुतौ वेदेऽनेकधाऽनेकप्रकारेण पठ्यत इत्यर्थः। इति सप्तावान्तरवाक्यानि अत्र यद्वृत्तेन दर्शितानि। स तादृशः सर्वप्रकारोऽनेककिरणः अपवर्गप्रदः स्वर्गप्रदः सृष्टिस्थितिसंहारकर्ता

प्रसिद्धो रविर्नो वाचं दधात्वित्येवंलक्षणेन प्रधानवाक्येन सहान्याद्यश्लोकेऽष्टौ वाक्यानि । अत्राशीर्वादस्तन्मुखेनेष्टदेवतानमस्कारश्च प्रदर्शितः। तथा वस्तुनिर्देशश्चात्र वाक्यैः पदैः अक्षरैश्च यथासारं प्रदर्शितः। तद्यथा-

वस्तुनिर्देश इति । वस्तुनः प्रतिपादयिषितस्य प्रमेयशरीरस्य निर्देशः सूत्ररूपेण प्रकाशनमुच्यते । अत्र खलु होराशास्त्रे जातकफलप्रदर्शनविषये तन्मूलत्वेनाष्टौ सूर्य-सोम-कुज-बुध-गुरु-शुक्र-शनैश्चरा लग्नराशयश्च परिगृह्यन्ते । तत्र प्रधानवाक्यान्ते साक्षाद्रविशब्दयुक्तेन सूर्यः।शशभृच्छब्देन युक्तेन वाक्येन चन्द्रः सूचितः। वर्त्मापुनर्जन्मनामित्यनेन वाक्येनापवर्गविषयेणापवर्गस्य च सत्त्वैकसाध्यत्वात् परिव्राजकस्य, रणेऽभिमुखे हतस्य च सूर्यमण्डलभेदकत्वसामान्योक्तिबलात्सत्त्वरूपो भौमः सूचितः। अथवा भौमस्याग्नेयत्वादग्नेश्च योगसाधनत्वेनापवर्गस्य मूलत्वादपवर्गविषयेण भौमः सूच्यते । तथा चोक्तं योगप्रकरणे-

"मूलाधारोद्गतो वह्निर्द्वादशान्तमुपाश्रितः ।
पीयूषवर्षपूर्णात्मा कामदो न तु मोक्षदः ॥
स हि चोर्ध्वं गतस्तस्मादपवर्गाय संभवेत् " । इति ।

एवमपवर्गस्य सत्त्ववद्भिः साध्यत्वात्समाधेश्च मूलाधारस्थितवह्निमूलत्वाच्च वर्त्मापुनर्जन्मनामितिवाक्येन सत्त्वात्मा आग्नेयो भौमोऽत्र सूचितः ।

आत्मविदामात्मेतिवाक्येन बुधनामधेयः विच्छब्दयुक्तेन बुधः सूचितः ।

क्रतुश्च यजतामिति वाक्येन 'क्रतूपयोग्यानि तपस्विनश्च द्रेष्काण० २५' इत्यादि। चापादि द्रेष्काणरूपेण स्रुग्भाण्डमुक्ताद्रेष्काणाः ३४ '. इत्याद्युक्तमीनादिद्रेष्काणरूपेण च सम्बन्धवान् धर्मक्रियाफलदो गुरुः सूचितः ।

तथा भर्तामरज्योतिषामिति वाक्येन भोगप्रधानः शुक्रः सूचितः ।

लोकानां प्रलयोदयस्थितिविभुरित्यनेन प्रलयकरः शनैश्चरः सूचितः ।

श्रुतावनेकधेतिवाक्येन राशित्वसम्पादकानेकत्ववाचकानेकशब्दयुक्तेन लग्नं राशिश्च सूचितः । ते च प्रत्येकं बहुविधविशेषयुक्तायुर्दायाष्टकवर्गे पृथग्विधेषु योगेषु च गृह्यन्त इत्येभिर्वाक्यैरत्र सूचिताः ।

तथा नवर्क्षचरणात्मकराशिचक्रगतानि सप्तविंशतिनक्षत्राणि सप्तविंशतिभिः पदैः सूचितानि ।

त्रैलोक्यदीप इतिपदेन जन्मनः पूर्वमपादानभूतस्यानूकशब्दवाच्यस्य पूर्वलोकस्य जननादिमरणान्तस्य चेह लोकस्य मरणात्परस्य गतिशब्दवाच्यस्य परलोकस्य चेतित्रयाणां लोकानां दीपत्वात्तत्रत्यसत्यसमस्तवृत्तान्तदर्शकत्वं भगवतो रवेः प्रतिपादयतो होराशास्त्रप्रतिपाद्यं वस्तु समस्तं सूचितम् । एतद्दृष्टजातकविषयम् ।

नष्टजातकविषयश्चात्र किंचिदक्षरसंख्यया सूचितम्। तद्यथा–

'मूर्तित्वे परिकल्पितः शशभृतो वर्त्माऽपुनर्जन्मनामात्मेति'

एतावतेतिशब्दांतेन श्लोकांशेन तत्प्रदर्श्यते। 'शब्दन्यायसमन्वितेषु' (१।३) इत्युत्तरश्लोके वक्ष्यमाणपदेनास्य शास्त्रस्य शब्दन्यायव्यतिरेकेणापि कश्चिदर्थवाचकत्वं प्रतिपादयिष्यमाणमत्राप्यनुसर्तव्यम्। मूर्तित्वे परिकल्पित इत्यत्र अपरिकल्पित इति पदच्छेदोऽप्यत्रापेक्ष्यते, तेन मूर्तित्वे अपरिकल्पितः शशभृत आत्मेति योजनीयम्। अस्यायमर्थः–मूर्तित्वमित्यक्षरसंख्यया पञ्चषष्ट्यधिकचतुःशतानि (४६५) भवन्ति। तत्रापरिकल्पित इति परिकल्पितसंख्यया शून्यः। परिकल्पितसंख्यया ततः शोधनीय इत्यर्थः। इयमत्र प्रक्रिया–

पञ्चषष्ट्यधिकचतुःशतानि (४६५) विन्यस्य ततः परिकल्पितशोधने (६११२१) कर्तव्ये एकविंशत्यधिकशतस्य शोधनं कर्तुं शक्यते, ततः परस्यांकद्वयस्य शोधनं यथान्यायं शोधनविषयाशून्यत्वान्न शक्यते। अतः परिकल्पितसंख्यायां चतुर्थपंचमांकयोः शोधनं मूर्तित्वं संख्यायाश्चतुर्थपंचमांकयोः शून्यत्वात्पुनरपि तत्रैव मूर्तित्वसंख्यायां विलोमेन द्वितीयप्रथमयोरङ्कयोः कर्तव्यम्। तथा कृते पञ्चषष्ट्यधिकचतुःशतानि (४६५) अष्टाविंशत्यधिकत्रिशतानि (३२८) भवन्ति।

यथा–४६५–६११२१–३२८–४६५,

१२१
---
३४४
१६
---
३२८

स च राशिः शशभृतः शशेन पंचपंचाशता (५५) भृतः पूरितः आत्मा भवति (यथा ३२८+५५=३८३)। अस्य शास्त्रस्य श्लोकसंख्यारूपं शरीरं भवतीत्यर्थः।

मूर्तित्वे (४६५) संलाप (१३७) शोधनेन शश (+५५) क्षेपणेन च गोजाल (३८३) मित्यक्षरसंख्यया त्र्यशीत्यधिकानि त्रिशतानि अस्य शास्त्रस्यात्मभूतश्लोकप्रमाणभूतानि भवन्ति। आदेरारभ्य 'अध्यायानां विंशतिः पंचयुक्ता' (उपसं.३) इत्यध्यायसंख्याकथनश्लोकावधिकानि गोजालप्रमाणानि (३८३) पद्यान्यत्र शास्त्रे वक्ष्यन्त इत्युक्तं भवति।

अत्र श्लोकसंख्यानयनप्रकारे तिस्रः संख्या निर्दिष्टास्तत्र प्रथमा मूर्तित्वे (४६५) इति। द्वितीया परिकल्पितरहितमूर्तित्वं जरागौ (३२८) रिति। तृतीया परिकल्पितरहितं शशयुक्तं मूर्तित्वं गोजाल (३८३) मिति। एतासु प्रथमसंख्यास्थानत्रयगतानां संख्यानां पञ्चषट्चतुर्णां योगे पञ्चदश भवन्ति। द्वितीयसंख्यास्थानत्र-

यस्थानामष्टकद्विकत्रिकाणां, तथा तृतीयसंख्यागतानां त्रिकाष्टकत्रिकाणां च योगः सप्तविंशतिर्भवति । तस्मात्पञ्चदशघटिकाप्रमाणे नवांशः सप्तविंशतिनक्षत्रात्मको भवतीत्यर्थ उपलभ्यते। ततो लग्नगतनवांशनाडिका इच्छाराशिः सप्तविंशतिर्गुणकारः पञ्चदशभागहारः । एभिस्त्रैराशिके नष्टजन्मनक्षत्रं लभ्यते । अत्र क्रियालाघवाय गुणकारभागहारयोस्त्रिभिरपवर्तने कृते नवकं गुणकारः पञ्चकं भागहारश्च भवति । लग्नचन्द्रयोस्तुल्यफलत्वाच्चन्द्रभुक्तनवांशनाडिकाभिरपि नष्टजन्मनक्षत्रानयनं कर्तव्यम् । तथा चोक्तम्-

"नवांशके शीतगुभुक्तनाड़िकां निहत्य रन्ध्रेण विभज्य पञ्चभिः ।
फलान्युडून्येव तथैव लग्नात् प्रवर्तनं भेष्विति नष्टजातकम् ॥ १ ॥" इति-

अन्योपि नष्टजातकप्रकारोऽत्र दिङ्मात्रेण सूचितः । उक्तोयं नष्टजातकप्रकारो लग्नविषयः । अथारूढविषयः प्रदर्श्यते-

'मूर्तित्वे परिकल्पितः शशभृतः इति द्वादशभिरक्षरैः स्वसंख्यावशाद्योजितैः षट्चत्वारिंशत्संख्यो राशिर्भवति स च शशभृतो मूर्तित्वे परिकल्पितः कर्कटराशेरारुढत्वे परिकल्पित इत्युक्तिबले तदानयनप्रकारोऽत्रगन्तव्यः । एकोनपंचाशद्राशिरत्र कूटस्थत्वेन परिगृह्यते तस्मादारूढचक्रशोधनं कर्तव्यम् । तत्प्रकारश्च-

"प्रियो मानी नटो गानी दानी यानी तनुः पटुः ।
भानुः खनिः धनिः सूनुः क्रमात्त्याज्यास्त्वजादितः ॥"
इत्यनेनोक्तः ।

मेषादिराशिषु क्रमेणारूढेषु सत्सु कूटस्थराशेः प्रियादयः शोधनीया इतिन्यायेन कर्कटराशावारूढे सति कूटस्थाद् गानीशोधनेन यथोक्तषट्चत्वारिंशत्संख्यो राशिर्भवति । स चात्र प्रदर्शितेन श्लोकसंख्याप्रमाणेन गोजालेन ( ३८३ ) स्थानत्रयसंख्यायोगवशात् संक्षिप्तितेन चतुर्दशकेन हत्वा चतुष्पञ्चाशता विभज्य शिष्टे नष्टजन्मनक्षत्रं लभ्यते । हारकः कुत्र प्रदर्शित इति चेदत्र मूर्तित्वे परिकल्पितः शशभृतो वर्त्म इति चतुर्दशभिरक्षरैः पंचपंचाशत्संख्यो राशिर्भवति । स चात्र अपुनः एकोनञ्चतुष्पञ्चाशत्संख्यो भवति । सोऽत्र हारकत्वेन सूचितः तत्रापि यथोक्तयोर्गुणकारहारकयोर्द्वाभ्यामपवर्तनेन सप्तकं गुणकारः सप्तविंशतिर्भागहारश्च स्यात् । "सप्ताहतत्रिधनभाजितशेषमृक्षम्" इत्युक्तं भवति । कूटस्थराशेः सप्तकमपनीय, आरूढचक्रशोधनं कृत्वा शेषेण यथोक्तकर्मण्यनुष्ठिते लग्नराशिर्लभ्यते । एवमारूढविषयो नष्टजातके चतुःसाधनोञ्जेन प्रकारेणात्र शृङ्गग्राहिकया सूचित इति द्रष्टव्यम् । एवं वस्तुनिर्देशोपि सम्यक् प्रतिपादितः । अत्राह गोविन्दः-

मूर्तित्व इत्यनेन श्लोकेन वराहमिहिराचार्यः शास्त्रं चिकीर्षुः स्वेष्टदेवतायाः स्वाभिमतं वरं प्रार्थयते—स रविर्नो वाचं दधात्विति । 'अर्थबहुलं शास्त्रप्लवं प्रारभे' इत्युत्तरप्रतिज्ञां सफलीकर्तुमियं प्रार्थना विवक्षितार्थसर्वस्वगर्भा 'वाचं दधातु' इत्यर्थः । अथवा वागिति विद्याज्ञानं दधात्विति यावत् । अथवा त्रैकाल्यकथनेऽवन्ध्यां वाचं दधात्विति वा । रावयतीति रविः । रवेः शब्दब्रह्ममयत्वात् रवेरेव वाक्प्रार्थना युज्यते । यः शशभृतो मूर्तित्वे परिकल्पितः शशभृतश्चन्द्रस्य मूर्तित्वे शरीरत्वे परिकल्पितः परितः कल्पितः परिकल्पितः आगमानुमानप्रत्यक्षरूपैः प्रमाणैः प्रामाणिकैः परिकल्पितः । 'सुषुम्णासूर्यरश्मिश्चन्द्रमाः' इत्यादिश्रुतिः ।

श्रीसाम्बस्तुतौ चोक्तम्—

"नाशं नास्मच्चरणशरणा यान्त्यपि ग्रस्यमाना
दैवैरित्थं सितमिव यशो दर्शयन् स्वं त्रिलोक्याम् ।
मन्ये सोमं क्षततनुममागर्भवृद्ध्या विवस्व–
च्छुक्कच्छायां नयसि शनकैः स्वां सुषुम्णांशुभासा ॥"

–काशशून्ये जलमये चन्द्रमसि रविरश्मिसम्पातात् समकाशं चन्द्रशरीरमुत्पद्यत इति युक्त्या सिद्ध्यति । अर्केन्दुभुवामर्कस्य महीयोरूपं पश्चिमाभिमुखं भ्रमति ज्योतिश्चक्रे प्राङ्मुखं गच्छन्तश्चन्द्रादयो ग्रहा गोलरूपास्तत्रैव स्थितस्य प्राङ्मुखगतस्य गोलरूपस्य रवे रश्मिसम्पातात् सूर्याभिमुखसार्धभागा दीप्यन्ते । तथा चार्यभटः—

"भूग्रहभानां गोलार्धानि स्वच्छायया विवर्णानि ।
अर्धानि यथासारं सूर्याभिमुखानि दीप्यन्ते ॥" इति ।

अन्येऽप्याहुः—

"अर्काधःस्थस्येन्दोरूर्ध्वार्धे ह्यर्करश्मयो यान्ति ।
दृश्यार्धमतः कृष्णं तदार्कभतः पूर्वके तु चन्द्रमसि ॥
पश्चिमपार्श्वेऽर्ककरा लभ्यन्ते तत्र शौक्ल्यमतः ।
इन्दोरेवं वृद्धिः स्याच्छौक्ल्यस्य हि पूर्णता च पूर्णान्ते ॥
पश्चिमभागे कार्ष्ण्यं ततः क्रमात् सूर्यरश्मिराहित्यात् ।" इति

एतत्प्रत्यक्षतो दृश्यते च । तस्मान्मूर्तित्वे परिकल्पितः शशभृत् इत्युपपन्नं भवति। अर्थान्तरमपि सूच्यते—

शशभृतो मूर्तित्वे परिकल्पितः सूर्यः । एतदुक्तं भवति शशभृतः प्रकृतिभूतस्य जडात्मकस्य चन्द्रस्य मूर्तित्वे प्रपञ्चरूपत्वे पुरुषभूतस्य चिदात्मकस्य सूर्यस्य रश्मिवशाच्चेतनत्वं दृश्यते । तस्मात् प्रपञ्चव्याप्तः सूर्य इत्यर्थः । अथवा 'शशभृतो मूर्ति-

त्वे परिकल्पितो मनस्तुहिनगुः' इत्यनेन शशभृच्छब्देन मनो विज्ञायते । मनसो मूर्तित्वे परिकल्पितः, मनो योयो मूर्तिं ध्यायति तत्तद्भावेपरिकल्पितः सगुणब्रह्म भूत्वा भक्तानामभिमतविग्रहमवलम्ब्याभीष्टं फलं ददातीत्यर्थः । परिकल्पित इत्यनेन काल्पनिकमस्य विग्रहवत्त्वमित्यपि सूचितम् ।

अथ 'वर्त्मापुनर्जन्मनाम्' इत्यस्यार्थो व्याख्यायते-

त्रैवर्णिकानामुपनयनानंतरं पितृमुखाद्गायत्रीं श्रुत्वा ब्रह्मचारिवानप्रस्थगृहस्थाश्रमावलम्बिनां सेवमानानामनुदिनं तिसृषु संध्यासु गायत्रीमन्त्रदेवतामादित्यमुपास्य संन्यासाश्रमस्याधिकारितामापाद्य संन्यासितामवलम्ब्य स्थितानां हि मोक्षसिद्धिः । तस्मादपुनर्जन्मनां मुमुक्षूणां मोक्षं गन्तुं भगवानादित्यो वर्त्मेति सिद्ध्यति । अथवा स्थूलसूक्ष्मपरत्वेन त्रिधा उपासना विद्यते, निराकारं परमात्मानं विग्रहवन्तं मन्त्राङ्गन्यासादिना परिकल्प्य या भगवत्सेवा मन्त्रावृत्त्या क्रियते सा स्थूलोपासनाऽधमाधिकारिणा विधीयते । पुनः मूलाधारादारभ्य ब्रह्मरन्ध्रान्तं मतभेदेन रक्तशुक्लतन्तुनिभां प्रभां ध्यात्वा सा प्रभा तदुपरिस्था । सार्धसोमं सूर्यं प्राप्य तस्मादमृतं स्रावयित्वा पुनरप्यमृतरूपेण मूलाधारं प्राप्य पुनरपि पूर्ववत् मूलाधारात् ब्रह्मरंध्रान्तं प्राप्येत्थं गमागमेन योपासना सा सूक्ष्मोपासना । एषा मध्याधिकारिणा विधीयते ।

अयं प्रकारः श्रीभगवत्पादाचार्यैरोक्तः-

"मूलाधारात्प्रभृति तडिदाभा प्रभा सूक्ष्मरूपा
गच्छन्त्यामस्तकमणुतरा तेजसां मूलभूता ।
सौषुम्णान्तश्चरणनिपुणा सा पवित्रानुबद्धा
ध्याता सद्योऽमृतमथ रवेः स्रावयत्सार्धसोमात् ॥" इति ।

पूर्वोक्तायाः स्थूलोपासनाया इयं प्रवरा निरवयवत्वादितोऽप्युत्कृष्टा परोपासना सच्चिदानंदरूपे ब्रह्मणि अहमिति भावना । तस्याः सिद्ध्यर्थं सूक्ष्मोपासनामङ्गीकुर्वंति मुमुक्षवः सूक्ष्मोपासनायाः सूर्यसापेक्षत्वात् मुमुक्षूणामपुनर्जन्मनां मोक्षप्राप्तौ सूर्यो वर्त्मेति सिध्यति ।

अथवा जन्तुर्निधनकाले यश्चित्तेजो ध्यायति चेत् पुनः शरीरं न गच्छति मुक्तिं प्राप्नोति च । सर्वतेजोमयः सूर्यः खलु । तथा चोक्तम्-'तेजसा गोलकः सूर्यः' इति । जीवितान्ते तेजश्चिन्तनात् मोक्षसिद्धिरस्तीति श्रीमाघेनोक्तम्-

"आर्ता जन्मप्रभृति भगवत्सेवनं तद्धि लोके
याच्यं केनाप्यपरिमितफलं भुक्तिमुक्तिप्रकारम् ।
ज्योतिर्मार्गस्मृतिपथगतो जीवितान्ते विभास्वन्
निर्वाणाय प्रभवति मनो तेन तेजः परोऽन्यः ॥" इति ।

आत्मेत्यात्मविदामित्यत्रात्मविदात्मज्ञानिनामात्मा यदा ह्यात्मज्ञानं भवति तदैव मुक्तो भवति। तथा चोक्तम्—

"मोक्षस्य नैव किंचिद्धामास्ति न चापि गमनमन्यत्र।
अज्ञानमयग्रन्थेर्भेदो यस्तं विदुर्मोक्षम् ॥" इति

'ज्ञानादेव तु कैवल्यम्' इति श्रुतिवागपि श्रूयते। इति शब्दोऽत्र पर्याप्तौ वर्तते आत्मविदामात्मेति निश्चित इत्यर्थः स्थूलसूक्ष्मोपासनयोः काल्पनिकत्वात्।

अथवाऽत्रेतिशब्दः प्रत्येकं सम्बध्यते। अपुनर्जन्मनां वर्त्मेति परिकल्पितः। यजतां क्रतुरिति परिकल्पितः, आत्मविदामात्मेति परिकल्पितः, इत्यादि। क्रतुश्च यजतामित्यत्र होतृरूपेण हुतभुग्रूपेण स्थितः कर्मसमुदायफलं ददातीति पूर्वमीमांसकसिद्धान्ते कर्मसमुदायरूपेण स्थित इत्यर्थः

भर्तामरज्योतिषामित्यत्र स्वोत्पादितेषु षट्सु ऋतुष्वपि तत्तदृतुजन्यानि द्रव्याण्यान्नादीन्युत्पाद्य देवानां हविर्भागमापादयति। अतः कारणादमराणां भर्ता भवति। आकाशवर्तिनां ग्रहनक्षत्रादीनां स्वप्रभायोगवशात् प्रभावत्वमुत्पादयति तस्मात्तेषां च भर्ता भवति। अथवा रुद्रादीनां सूर्योपासनं विद्यते तस्मात्तेषां भर्तेति तथा चोक्तम्—

"यस्योदयास्तसमये सुरमुकुटनिघृष्टचरणकमलोऽपि।
कुरुतेऽञ्जलिं त्रिनेत्रः स जयति धाम्नां निधिः सूर्यः ॥" इति।

'लोकानां प्रलयोद्भवस्थितिविभुः' इत्यत्र त्रिगुणानवलम्ब्येति मूर्तिभावेन लोकानां सृष्टिस्थितिसंहारान् करोतीत्यर्थः।

अथवा स्वोत्पादितेषु मेषादिराशिषु ग्रहस्थितिवशात् चतुःप्रकारसम्भवानां जन्तूनां जन्म विद्यते, रक्षणं, संहारश्च। तस्माल्लोकानां प्रलयोद्भवस्थितिविभुरिति युज्यते। च शब्देन प्रत्यहं लोकानां प्रलयोद्भवस्थितिविभुरिति सूचयति। उदये समस्तं जगत् प्रतिबोधमेति, मध्याह्नसमये स्वभावक्रियासु प्रसरति, अस्तसमये उच्छ्वसितमात्रं शेते, । तथा चोक्तम्—

"यस्योदये जगदिदं प्रतिबोधमेति मध्यं गते प्रसरति प्रकृतिक्रियासु।
अस्तस्थितौ स्वपिति चोच्छ्वसितैकमात्रं भानुः स एष जयति प्रकटप्रभावः॥"इति।

अनेकधा यः श्रुतौ वाचकभेदेऽपि वाच्यत्वमस्यैवेत्यर्थः। नैककिरणोऽसंख्यकिरणः अथवा सहस्रकिरण इति वा। पञ्चशतकिरणैर्भूमिषु द्रव्यरसमाददाति, अपरैः पञ्चशतकिरणैर्विसृजति जगदाप्यायनकर इत्यर्थः। त्रैलोक्यदीपस्त्रैलोक्यप्रकाशकः। अथवा त्रीन् भूतभविष्यद्वर्तमानान् लोकयति पश्यतीति त्रिलोकः त्रिलोकदर्शी तस्य भावस्त्रैलोक्यं त्रैलोक्यदीपस्त्रिकालदर्शी तेन दीपवत् सर्वं प्रकाशयतीति ॥१॥

(शार्दूलविक्रीडितम्)

भूयोभिः पटुबुद्धिभिः पटुधियां होराफलज्ञप्तये
शब्दन्यायसमन्वितेषु बहुशश्शास्त्रेषु दृष्टेष्वपि ।
होरातन्त्रमहार्णवप्रतरणे भग्नोद्यमानामहं
स्वल्पं वृत्तविचित्रमर्थबहुलं शास्त्रप्लवं प्रारभे ॥ २ ॥

अथ व्यापारस्य लोकानुग्रहविषयत्वं प्रदर्शयन् चिकीर्षितं प्रतिजानीते ।

अहं भूयोभिः पटुबुद्धिभिः पटुधियां होराफलज्ञप्तये, बहुशः शास्त्रेषु दृष्टेषु सत्स्वपि होरातन्त्रमहार्णवप्रतरणे भग्नोद्यमानां पटुधियां शास्त्रप्लवं प्रारभे इत्यन्वयः। भूयोभिर्बहुभिः पटुबुद्धिभिः पटुत्वं गुणसमग्रता तद्युक्तबुद्धिभिः । बुद्धेर्गुणाश्च-

"शुश्रूषा श्रवणं ज्ञानं ग्रहणं धारणं तथा।
ऊहापोहार्थविज्ञानं तत्त्वज्ञानं च धीगुणाः ॥" इतिप्रसिद्धाः ।

अनेन पटुबुद्धिभिरिति होराचार्याणां निर्देशेन होरातन्त्रनिर्वहणे ऊहापोहपटुत्वं विशेषणपेक्षते । यथोक्तम्-

"स्वस्थचित्तो विविक्तस्थः पञ्चसिद्धान्तकोविदः ।
ऊहापोहपटुः सिद्धमन्त्रो जानाति जातकम् ॥"

होराफलज्ञप्तये जातकफलावबोधनार्थं दृष्टेषु श्रुतिमूलत्वात् पराशरादिभिः साक्षात्कृतेषु । होरातन्त्रस्य पूर्वजन्मैहिकपारत्रिकविषयं ( यस्य ) बहुविधविशेषबोधकत्वाददृष्टपारकत्वेन महार्णवरूपणम् । अतस्तत्प्रतारणसाधकत्वाच्चिकीर्षितशास्त्रस्य प्लवरूपणं घटते । पूर्वशास्त्राणां शब्दन्यायसमन्वयकथनेन चिकीर्षितशास्त्रे शब्दन्यायव्यतिरेकेणापि कश्चिदर्थविशेषसूचनं ध्वन्यते । स्वल्पमपि सारसंग्रह रूपत्वात् सुखाभ्येयमिति भावः । अर्थबहुलम् स्वशास्त्रस्य जातकविषयत्वेऽपि । प्रश्नशास्त्राद्यर्थानामपि प्रतिपादकत्वं द्योत्यते ।

पूर्वेषां शास्त्राणामभिधानाभिधेययोः शब्दार्थयोर्बाहुल्याद्दुर्गूढत्वेन होरातन्त्रमहार्णवप्रतरणं सुकरं भवेदित्यभिप्रायः ।

अत्राह गोविन्दः-

"भूयोभिरिति । इष्टदेवतायाः परमात्मनो रवेः स्वाभिमतं वरं प्रार्थ्य सिद्धं कृत्वा शास्त्रचिकीर्षुरयमाचार्यश्चिकीर्षितप्रतिज्ञां करोति, शास्त्रप्लवं प्रारभे इति । किमर्थमिति चेत् । होरातन्त्रमहार्णवप्रतरणे भग्नोद्यमानां होराफलज्ञप्तये, अत्र महार्णवशब्दे नात्यपारत्वम्, गम्भीरत्वम्, विस्तीर्णत्वं च सूचयति । ततो मन्दमतीनां दुस्तरत्वात् सुगमप्रतरणाय शास्त्रप्लवं प्रारभे इत्यर्थः"

शास्त्रप्लवमित्यत्र रूपकालङ्कारेण प्लवसाधर्म्यमभिव्यज्यते। कीदृशमिति चेत्। स्वल्पम्। ग्रन्थतः स्वल्पम्। पूर्वशास्त्रेभ्यः स्वल्पमित्यर्थः। वृत्तविचित्रम्। वृत्तैः शार्दूलविक्रीडितादिभिर्नानाविधम्। अर्थबहुलं बह्वर्थसमन्वितम्। ग्रन्थतः स्वल्पत्वेऽर्थतोऽपि स्वल्पत्वं भवतीति शंकापरिहारार्थमर्थबहुलमित्युक्तम्। अस्य शास्त्रस्यार्थसर्वस्वं कोऽपि न परिच्छिनत्तीत्यर्थः।

प्लवसाधर्म्यं वृत्तं वर्तुलं वृत्तं च तद्विचित्रं चेति वृत्तविचित्रमर्थबहुलं रत्नवस्त्राद्यनेकार्थसहितं प्लवमित्यर्थः।

होरातन्त्रमहार्णवमतरणे भमोद्यमानामित्यत्र भमोद्यमशब्देनान्यशास्त्राणि बहुशो निरीक्ष्य तत्सारासारं विभज्य निर्णेतुमशक्तानामनेन शास्त्रेण सुखावबोधो भवतीत्यर्थः। कथं भवति-

बहुभिः पूर्वाचार्यैर्निर्दोषेषु शास्त्रेषु कृतेष्वपि इदं शास्त्रं प्रारभ इत्यत्रायं विशेषः। पूर्वशास्त्रेषु पटुधियामेवाधिकारो न मन्दमतीनाम्। कथ्यमाने मच्छास्त्रे पूर्वशास्त्रेषु कृतश्रमाणामनिर्णीतशास्त्रतत्त्वानामप्यधिकारित्वमित्युक्तं भवति, होरातन्त्रमहार्णवमतरणे भमोद्यमानामित्युक्तत्वात्, कृतत्रेताद्वापरेषु गतेष्वचिरायुषो रोगभाजः पापिष्ठा मन्दमतयश्च जायन्ते तस्माच्छास्त्रस्य लघुकरणाभावे शास्त्रं पतिष्यत्येवेत्यभिमित्येतदुक्तं भवति। पराशरहोरायां पराशरमुनिं प्रति मैत्रेयवचनम्-

"संकरात्तु फलानां च ग्रहाणां गतिसंकरात्।
नान्येयमीदृशस्येति परिच्छेत्तुमलं नराः॥
कलौ युगे ततोल्पैव बुद्धिः पापोत्तरा नराः।
अतो न चास्य प्रचयगमनं न प्रयोजनम्॥
तत्र त्रेतायुगे केचिद्द्वापरे च कृते युगे।
कुशाग्रमतयः सर्वे पुण्यभाजश्चिरायुषः॥
ततोल्पबुद्धिगम्यं यच्छास्त्रमेतद्वदस्व मे।
आयुश्च लोकयात्रा च द्वे शास्त्रेऽस्मिन् प्रयोजनम्॥
निश्चेतुं कोनु शक्नोति वशिष्ठो वा बृहस्पतिः।
किं पुनर्मनुजास्तत्र विशेषात्तु कलौ युगे॥"

महार्णवपद्धतिविस्तीर्णगंभीरापारपूर्वशास्त्राणि पठितुं निर्णेतुमशक्तानामल्पे ग्रन्थाध्ययने बह्वर्थग्रहणाय स्वल्पशास्त्रं करोमीत्यर्थः॥ २॥

(इन्द्रवज्रा)

होरेत्यहोरात्रविकल्पमेके वाञ्छन्ति पूर्वापरवर्णलोपात्।
कर्म्मार्जितं पूर्वभवे सदादि यत्तस्य पक्तिं समभिव्यनक्ति॥ ३॥

अथ शिष्यप्ररोचनाय होराशब्दनिर्वचनपूर्वकं होराशास्त्राभिधेयं प्रतिपादयति।

एके पूर्वापरवर्णलोपादहोरात्रविकल्पं होरेति वाञ्छन्तीत्यन्वयः । 'एके मुख्यान्यकेवलेषु' इति सिद्धः। पूर्वापरवर्णलोपात् पूर्वापरवर्णलोपं विधाय पूर्ववर्णस्याकारस्य, अपरवर्णस्य त्रकारस्य च लोपं विधायेत्यर्थः । ल्यब्लोपे पञ्चमी । अहोरात्रविकल्पं विशिष्टः कल्पो विकल्पः। जननेन वा प्रश्नेन वा अहोरात्रयोर्विकल्पः। अकारत्रकारयोर्वर्णयोर्लोपं विधाय होरेति वाञ्छन्ति। जननोपलक्षितं वा प्रश्नोपलक्षितं वा तात्कालिकमहोरात्रावयवं होराशब्देन निर्दिशन्तीत्यर्थः। स च विशिष्टोऽहोरात्रावयवस्तात्कालिकग्रहस्फुटानां लग्नस्य च निर्णयसाधनत्वेनास्मिञ्छास्त्रेऽवधारणीयः। तथा चोक्तं श्रीपतिना-

'ज्ञेयोऽत्र प्रथमं हि जन्मसमयः' इति । तदवधारणप्रयोजनमाह अत्र सा होरेत्याहर्तव्यम् । सा होरा पूर्वभवेऽर्जितं सदादिकर्म व्यक्तस्य पक्तिं समभिव्यनक्तीति संबंधः । पूर्वजन्मनि अर्जितं सदादि, आदिशब्देन तदसच्च गृह्यते। दृढकर्मोपार्जितं सत् । अदृढकर्मोपार्जितमसत् । दृढादृढकर्मोपार्जितं सदसदिति त्रिविधं यत्कर्म तस्य पक्तिं परिपाकं समभिव्यनक्ति सम्यगभिव्यनक्ति। तथा च सारावल्याम्-

"यदुपचितमन्यजन्मनि शुभाशुभं तस्य कर्मणः पक्तिम् ।
व्यञ्जयति शास्त्रमेतत्तमसि द्रव्याणि दीप इव ॥" इति । -
"दशाप्रभेदेन विचिन्तयेद्दृढं दृढेतरं चाष्टकवर्गगोचरैः ।
दृढादृढं योगवशेन चिन्तयेदिति त्रिधा जातकसूक्ष्मसंग्रहः ॥" इति।
फलचिन्तनस्य त्रैविध्यं चाचार्यैः प्रदर्शितम्-
"आधानजन्मापरिबोधकालेसंप्रच्छतो जन्म वदेद्विलग्नात् ।" इति ।

वक्ष्यमाणनष्टजातकादिप्रश्नविशेषेषु प्रथमावधारणीयस्योदयलग्नस्य साधनभूतदिनगतनाडिका निर्णेतुं कालारूढयोरवश्यं भाविनः सम्बन्धस्य प्रतिपादकसूक्ष्मराशिप्रमाणमपि प्रदर्शितं होरेत्यहोरात्रविकल्पमित्यनेन। कथमिति चेत । लुप्लृच्छेदने, इत्यस्माद्धातोर्निष्पन्नस्य लोपशब्दस्य च्छेदार्थवाचकत्वेन छिन्नस्य च भागद्वयात्मकत्वेन पूर्वापरवर्णविभागादिति अर्थात्सिद्ध्यति। ततो होरेत्यत्र पूर्ववर्णस्याधस्तादपरवर्णो रेफः स्थाप्यः। एवं विभक्तेऽक्षरसंख्याया रत्नदानमिति प्राणद्वयाधिकाष्टविनाड्यात्मकं सूक्ष्मराशिप्रमाणमत्रोपदिष्टं भवति। षष्टिघटिकात्मकस्याहोरात्रस्य द्वादशधाविभागे पञ्चनाडिकया मेषादिराशयो भवन्ति। (मेषादीनां राशयश्चक्राणि) अत्रैकराशेः ( एकचक्रस्य ) पञ्चघटिकात्मकस्य षड्विंशो भागो द्रेष्काणद्वादशांशस्वरूपसूक्ष्मराशिप्रमाणं रत्नदानम् ( $\frac{८}{२}$ ) तस्यापि त्रेधाविभागे सति त्र्यंशद्वय-

युक्तषोडशप्रमाणात्मकसूक्ष्मद्रेष्काण इभस्तुल्य ( $\frac{१६}{१२}$ ) प्रमाणं स्यात् । शंकुच्छायाद्यवगते सावयवे प्रश्नकालादिगतैरेतयोः सूर्यवाराच्चतुष्कक्षयः गुलिकवाक्य(स) संवादि(दी) सूर्यवारे विकल्पश्चतुष्कक्षयः षड्विंशतिर्नाडिकाः, सोमवारे तथा विकल्पः द्वाविंशतिः, भौमवारे ततोऽपि क्षयः अष्टादश, बुधवारे चतुर्दश, गुरुवारे दश, भृगुवारे षट्, मन्दवारे द्वावित्यहोरात्रविकल्पशब्देन व्याञ्जितम् । तस्मादहोरात्रविकल्पो गुलिकः तथा चोक्तम्—

"चन्द्रो रुद्रो जयो विद्या नयस्तेनखनी रवेः ।
त्रिंशन्नाड्याहि गुलिकं दिनपंचकवान्निशि ॥" इति ।

गुलिकस्वरूपं चोक्तमन्यत्र—

"अथ गुलिकः क्रूरतमः शनैश्चरस्यात्मजः खलः पापः ।
सत्त्वाकृतिरत्युग्रो निगद्यते मृत्युरखिलसंहारी ॥
नीलाञ्जनसंकाशो रक्ताक्षो विषमभीषणो दीर्घः ।
पंचास्यः पृथुदंष्ट्रो भयंकरः सर्वदा गुलिकः ॥

इत्याद्युक्तस्वरूपा गुलिकोप्यत्र सर्वकालोपादानकारणत्वेऽत्र शास्त्रारम्भे प्रदर्शित इति वेदितव्यम् । अत्रान्योऽपि योजनाप्रकारः एके अहोरात्रविकल्पं पूर्वापरवर्णलोपाद्धोरेति वांछंतीति योजना । एके केचित्सम्प्रदायविद इत्यर्थः अत्रान्योपि योजनाप्रकारः अहोरात्रविकल्पमहोरात्रशब्देन द्वादशराशयः कथ्यन्ते, तेषां घटिकामण्डलसमानत्वात् । अथवाऽहोरात्रेत्यत्र हकारसंख्ययाऽष्टकं रेफेण द्विकप्रकारेण च द्विकमेतेषां संकलिते द्वादश लभ्यन्ते इत्यहोरात्रेण राशयः कथ्यन्ते एतेषां विकल्पश्चतुर्धा कल्पनमेकैकस्य राशेश्चतुश्चतुर्भागकल्पनं होरेति वांछन्ति पूर्वापरवर्णलोपात्पूर्वापरवर्णलोपं निमित्तीकृत्य, पूर्वशब्देनलयरहितो यथापूर्वं स्थायिधातुरुच्यते अपरशब्देन मूलं वक्ष्यते । वर्णशब्देन जीवः । लोपशब्देनापि नष्टं वस्तु उच्यते । पूर्वं चापरश्च वर्णश्च लोपश्चेति द्वन्द्वः । सर्वो द्वन्द्वोपि विभाषैकवद्भवति इत्येकवद्भावः धातुमूलजीवमृतानि वस्तूनि निमित्तीकृत्येत्यर्थः । मेषादिराशिषु चतुधा विभक्तेषु प्रथमो भागो धातुः । द्वितीयो मूलम् । तृतीयो जीवः । चतुर्थो मृतः इति कल्पनं होरेति वांछन्ति । इत्युक्तं भवति चतुर्भागस्य होरात्वकथनेन तत्र चतुर्भागे लग्नवत् संकल्पनं कर्तव्यमिति द्योत्यते । एको राशिर्नवर्क्षचरणात्मकस्तस्यचतुर्भागः पादत्रययुक्तास्त्रयस्त्रिंशद्घटिका भवन्ति तत्र नवांशकः पादोनचतुर्नाडिकात्मको भवति पश्चाऽऽश्च पृथिव्यप्तेजोवाय्वाकाशघटिकात्मको भवति । द्वादशांशकः एकोनपश्चाः द्विनाडिकायुक्तघटीद्वयात्मकश्च भवेत् इत्यादिभिर्धात्वादीनां विशेषा वक्तव्या, इति विधेन्यादिष्वायोपयोगादशा द्योत्यते । तस्मादह्नो रात्रेश्च वृद्धिह्रासयोस्त्रैरा-

शिकेन गुलिकानयनं कर्तव्यमित्यपि द्योत्यते कालनिर्देशमात्रादेव ग्रहस्फुटानामुदयलग्नस्य चानयनं गणितशास्त्रज्ञानादेव वेत्स्यति । गुलिकानयनमत्र व्यक्तमुक्तं च अतो जातकादिनिरूपणस्योपादानसर्वस्वमत्राविहितं भवति । अत्राह गोविन्दः-

'होरेति अहोरात्रस्य द्वादशपरिवर्तनकालस्य विकल्पं होरेत्येके वाञ्छन्ति । द्वादशराशिभिस्तदाश्रयैर्ग्रहैश्च हि सर्वं शुभाशुभं विचिन्त्यते ।' तथा च सारावल्याम्

"आद्यन्तवर्णलोपाद्धोराऽस्मात्संभवत्यहोरात्रात् ।
तत्प्रतिबन्धः सर्वो ग्रहभगणश्चिन्त्यते यस्मात् ॥" इति ।

अन्ये होरासंज्ञामन्यथा वर्णयन्ति यथैव तत्रैव सारावल्याम्-

"जातकमिति प्रसिद्धं यल्लोके तदिह कीर्त्यते होरा ।
अथवा देवविमर्शनपर्यायः खल्वयं शब्दः ॥" इति ।

आचार्यस्य तु पूर्वोक्तमेवाभिमतं तस्य युक्तिमत्त्वादहोरात्रविकल्पं होरेत्यत्र । विकल्पो विविधः कल्पः कल्पनाया विविधत्वं द्वादशराशितत्रवांशकद्रेष्काणहोरात्रिंशांशकादिभेदः अथवा अहनि निशि चाष्टभिर्विभक्तयोर्गुलिकयमघण्टकार्द्धप्रहरादयो भवन्ति । तैरपि शुभाशुभं चिन्त्यते अहोरात्रेषु अष्टभिर्विभक्तये सूर्यचारश्चिन्त्यते । तथा चोक्तम्-

"यामार्द्धमुदयात्पूर्वमारभ्याष्टासु संस्थिताः ।
अङ्गारादित्रयादीप्तंशान्तमृत्सादिकत्रयम् ॥
ध्वजोच शेषाद्वितयं दीप्तः शान्तध्वजा इति ।"

एष विधिः सर्वेषां शुभाशुभशकुनो फलनिरूपणे ग्राह्यः । पुनः क्षणिकग्रहादिसंचारोप्यहोरात्रादेर्विज्ञायते । तस्मादहोरात्राद्धोराशब्दो व्युत्पाद्यते । इति युक्तं भवति किमस्य होराशास्त्रस्य प्रयोजनमित्यत्राह-

पूर्वभवे पूर्वजन्मनि सदादि यत्कर्म स्वोपार्जितं तस्य पक्तिं पाकं व्यञ्जयति इयं होरेत्यर्थः । अथवा पूर्वभवः आधानसमयस्तस्मिन्काले ग्रहराश्यादिभिः सदादिकर्मफलं व्यञ्जयति ।

अथवा पूर्वभवः पूर्वं पितृपितामहादयस्तेषां भवे संसारे यत्कर्म सदादि पुण्यादि तत्फलं पुत्रपौत्रानुभावादयस्तानियं होरा व्यञ्जयति । अथवा पूर्वभवे पूर्वजन्मनि सदादि पुण्यपापव्यामिश्ररूपं यत्कर्म गर्भाधानादिमेतकार्यान्तं क्रियते तस्य हि तत्कालकृतस्य फलमयं कालः करोति । तथा चोक्तम्-

"सुखदुःखकरं कर्म शुभाऽशुभमुहूर्तजम् ।
जन्मान्तरेऽपि वा कुर्यात्फलं तस्यान्वयेपि वा ॥" इति ।

किं बहुना सर्वथापि कालाख्यस्येश्वरस्य दृष्टादिकर्मफलदातृत्वमत्रोच्यते । तथा च जातकसंग्रहे-

"दृष्टादिकर्मत्रयकालमीश्वरः कालस्वरूपः प्रददाति देहिनाम् ।
फलत्रयं यत्सदसद्विमिश्रं तत्संक्षये संक्षयकृत्तया पुनः ॥
तस्माच्छुभं कर्म शुभस्य कारणं फलस्य चान्यस्य यदन्यमित्यतः ।
शुभे तु काले शुभकृत्फलं शुभं प्रयाति तस्मादिदमत्र चिन्त्यताम् ॥
दशाप्रभेदेन विचिन्तयेद्दृढं दृढेतरं चाष्टकवर्गगोचरैः ।
दृढादृढं योगवशेन चिन्तयेदिति त्रिधा जातकसङ्गमसंग्रहः ॥
फलं क्रमात्सम्जगदुः पुरातनाः ॥" इति ।

तस्मादिदं होराशास्त्रमवश्यमध्येतव्यम् । पुरुषार्थोपयोगितयावगन्तव्यम् । अस्य शास्त्रस्यारम्भे त्वाचार्यः । ईश्वरस्यादित्यस्य प्रणिपातं कृत्वाऽस्माकं वाचं दधात्विति वरं प्रार्थितवान् । इति यत्तस्मादेतदध्येतॄणां भगवतो रवेः प्रसादादेव त्रैकाल्यज्ञानं भवतीत्युक्तं भवति । तथा चोक्तम्—

"अनेकहोराशास्त्रज्ञः पञ्चसिद्धान्तकोविदः ।
ऊहापोहपटुः सिद्धमन्त्रो जानाति जातकम् ॥"

संहितायामप्युक्तम्—

"तन्त्रे सुपरिज्ञाते लग्ने छायाम्बुयंत्रसंविदिते ।
होरार्थे च सुरूढे नादेष्टुर्भारती वन्ध्या ॥" इति ।

अस्यायमर्थः तंत्रे सुपरिज्ञाते ग्रहगणिततंत्रे दृग्गणितसाम्येन सुपरिज्ञाते । तथा च जातकसंग्रहे—

"योगे ग्रहाणां ग्रहणेर्कसोमयोर्मौढ्ये तथा वक्रगतेषु पञ्चसु ।
दृष्टानुरूपं करणं यदन्वहं तेन ग्रहेन्द्वान्गणयेत्रिचारकान् ॥" इति ।

लग्ने जन्मलग्ने प्रश्नलग्ने वा छायया शंकुच्छायादिना तज्ज्ञाने अम्बुयन्त्रैः कालज्ञानसाधनैर्वा लग्ने सम्यग्विदिते होराशास्त्रार्थतत्त्वे मनसि सम्यग्रूढे गुरुमुखाद्धोराशास्त्रार्थे समावगते गुरुदेवताप्रसादात् प्रकाशिते सति आदेष्टुर्दैवज्ञस्य वाङ्निष्फला न भवति इति ॥ ३ ॥

( शार्दूलविक्रीडितम् )

कालाङ्गानि वराङ्गमाननमुरो हृत्क्रोडवासो भृतो
वस्तिर्व्यञ्जनमूरुजानुयुगले जङ्घे ततोऽङ्घ्रिद्वयम् ।
मेषाश्विप्रथमा नवर्क्षचरणाश्चक्रस्थिता राशयो
राशिक्षेत्रगृहर्क्षभानि भवनं चैकार्थसम्प्रत्यये ॥ ४ ॥

नवर्क्षचरणाः मेषाश्विप्रथमाश्चक्रस्थिता राशयो वराङ्गादीनि कालाङ्गानि भवंति इति सम्बन्धः । सप्तविंशतिनक्षत्रेषु द्वादशधा विभक्तेष्वेको भागो नवर्क्षचरणात्मको भवति ।

मेषाश्विप्रथमाः नक्षत्राणां कादाचित्कयोर्धनिष्ठादित्वकृत्तिकादित्वयोरप्युदासा-याश्विप्रथमत्वमुक्तम् चक्रस्थिताः । चक्रं द्विविधं स्थिरचक्रं चरचक्रं चेति चरचक्रं तु "मेषादेः कन्यान्तं सममुदङ्मण्डलार्द्धमुपयान्तम् । तौल्यादेर्मीनान्तं शेषार्द्धं दक्षिणेनैव ॥" इत्युक्तस्वरूपमपक्रममण्डलम् । तत्र चक्रस्थिता राशयः प्रश्ने-ष्वारूढज्ञानार्थं गृह्यन्ते चरचक्रस्थिताः पुनः जातके प्रश्ने च विलग्नानयनाय गृह्यन्ते ।

राशय इति वनसेनादिवदवयवनिवृत्त्यर्थत्वेन राशिशब्दस्त्वस्मादंशकानां प्राधान्यं व्यनक्ति । अंशकेष्वपि नवर्क्षचरणेत्युक्तनवांशकानां प्राधान्यं ध्वन्यते । एते राशयः कालपुरुषस्याङ्गानि तत्र मेषो वराङ्गं षडाधारेभ्यः परस्ताद्भागम् । वृषभस्तस्याधःस्थितमाकंठादाननम् । उरस्तदधो यावद्बाह्वन्तरान्मिथुनम् । तदधस्त-नान्तरमुदरस्योपरि हृदयं कर्कटः तस्याधस्तान्नाभेरुपरिभागं सिंहः । नाभेरधस्ता-द्वस्तेरुपरिभागो वासस्थानं कन्या । लिंगनाभ्योर्मध्यादारभ्य लिंगमूलावधिप्रदेशो वस्तिशब्देनोच्यते तुलाराशिः । लिंगनाभ्योर्मध्यप्रदेशे द्विधाविभक्ते तदुपरिभागः कन्याराशिः । तदधोभागस्तुलाराशिरित्युक्तं भवति, । लिङ्गमूलादारभ्य गुदावधि-व्यञ्जनं वृश्चिकः अयं पुमानियं स्त्री व्यज्यते अनेनेति व्यंजनम् । गुदादिजानुपर्यन्त-मूरू चापराशिः । जानुमण्डलद्वयं मकरराशिः तदधो गुल्फावधि जंघायुगलं कुम्भराशिः । तस्याधोभागः पादयुगलं मीनः । इति देहे स्थिरचक्रन्यासः प्रदर्शितः ।

अङ्गालंभनादिभिर्वेति वक्ष्यमाणनष्टजातकप्रश्नादावस्योपयोगः । राश्यादयः पञ्चशब्दाः भवनशब्दश्चैकार्थसंप्रत्यये एकस्यार्थस्य संप्रत्ययेऽवबोधने वर्तते । गोविन्दः ।

'एवमिष्टदेवतास्तुतिं च तद्वरप्रार्थनां चिकीर्षितप्रतिज्ञामधिकारभेदशास्त्रस्वरूपं प्रयोजनं चोक्त्वाऽनुष्ठानप्रकारार्थं राशिस्वरूपमाह ।

'कालाङ्गानीति' ज्योतिः शास्त्रं तावत्त्रिस्कन्धमेकस्तावद्गणितस्कंधः, अपरः संहितास्कन्धः, तृतीयोऽयं होरास्कन्धस्तत्र गणितस्कन्धे गणितगोलौ प्रतिपाद्येते । संहितास्कन्धे तु सामान्यफलं वर्षलक्षणजनक्षयपुष्ट्यादिसमस्तानां पदार्थानां लक्षणा चोच्यते । होरास्कन्धे तु जातकप्रश्नमुहूर्ता निनिगद्यन्ते । तत्र मुहूर्तविधानं पृथक्कृत्य मुहूर्तशास्त्राणि पुरातनैः कृतानि । जातफलक्षणेनैव प्रश्नफलं च निरूपणीयम् । तथा च 'वासिष्ठ'—

"बुद्धा शास्त्रं तथा न्यायं बलाबलविधानतः ।
तथोक्तं जातके सर्वं तत्प्रश्ने विचिन्तयेत् ॥"

तथापि जातकप्रश्नौ पृथक्कल्पयित्वा कृष्णादिभिरार्यैः प्रश्नशास्त्राणि रचितानि, निमित्तानि तु संहिताहोरास्कन्धयोरुपरि कैश्चिन्निमित्तशास्त्राणि पृथक्कृतानि।

ज्योतिःशास्त्रं षडङ्गमुच्यते तथा चोक्तम्—

"जातकगोलनिमित्तप्रश्नमुहूर्ताख्यगणितनामानि।
अभिदधतीह षडङ्गान्याचार्या ज्योतिषे महाशास्त्रे॥"

इत्यनेनाचार्येण जातकप्राधान्येनेदं शास्त्रं क्रियते प्रश्नविधिरप्यत एव सिद्ध्यति। ततोऽत्र जातकप्रश्नयोः कालप्राधान्यात् कालपुरुषस्य लक्षणं प्रथममुपदिश्यते। 'मेषाश्विप्रथमा नवर्क्षचरणाश्चक्रस्थिता राशयो' वराङ्गादीनि कालाङ्गानीत्यन्वयः।

अथ मूर्तस्य कालस्य मूर्तानां राशीनां सप्तविंशतिनक्षत्रांतर्भूतानामवयवत्वमुपपद्यते अपमण्डलगतानां प्रदेशानामत्रावयवत्वेनोक्तास्ते राशयो यावता कालेन देशेदेशे भिन्नरूपा उन्मण्डलादुद्यन्ति स कालोऽत्राहोरात्रस्याऽवयवेन परिणमति इति वराङ्गात्प्रभृति यावदाननं तावदङ्गं मेषः। आननात्प्रभृति यावदुरस्तावदङ्गं वृषः इत्यादि द्रष्टव्यम्। कथममूर्तस्य कालस्य मूर्तत्वमुच्यते कालनिकत्वमेव फलविज्ञापकत्वेन तादृग्रूपत्वात् भजाद्यस्कंधांशदेश उरःशब्देनोच्यते। वासोभृच्छब्देन कटिप्रदेशो गृह्यते। तथा च सारावल्याम्—

"शीर्षास्यबाहुहृदयकजठरकटिवस्तिमेहनोरुयुगम्।
जानू जंघे चरणे कालस्याङ्गानि राशयोऽजाद्याः॥" इति।

अस्य प्रयोजनं तु कालपुरुषवत्कल्प्यमाने पुरुषशरीरे यद्राशिभागे शुभग्रहस्तस्य पुष्टिः। यत्र पापग्रहस्तत्रोपद्रवः इति। तथा च सारावल्याम्—

"कालनरस्याऽवयवात्पुरुषाणां कल्पयेत्प्रसवकाले।
सदसद्ग्रहसंयोगात्पुष्टिश्चोपद्रवाश्चेति॥"

नष्टजातकाध्याये जन्मराशिकल्पनेऽप्युक्तम्—

"लग्नत्रिकोणोत्तमवीर्ययुक्तं भं प्रोच्यतेऽङ्गालभनादिभिर्वा।"

योराशिर्जिज्ञासितः सोंगस्पर्शे विज्ञातव्यः। अत्र पुनर्व्रणविकटक्षतानामुत्पत्तिस्थानं जिज्ञासितं, तत्रापि स्फुटेन राशीनां तद्विज्ञायते। एतत्प्रश्नेप्युपयुज्यते यदङ्गभूतो राशिरुदयः, आरूढस्थश्च तद्राशौ पापग्रहयोगे तत्र रोगादि वाच्यम्। पुनः राश्याधिपयोरभेदोपचाराच्छरीरे राशिस्थानानि, ग्रहाणां स्थानानि च भवंति। मेषकुजयोर्वराङ्गम्। वृषशुक्रयोर्मुखम्। मिथुनबुधयोरुरः। कर्कटचन्द्रयोर्हृदयम्। सिंहरव्योः क्रोडभागः। चापगुर्वोरूरुः। मकरमन्दयोर्जानुः। राहोः पादम्। एवं ग्रहस्थानान्यनेनोक्तानि। मेषाश्विप्रथमा इत्यत्र पञ्चांगेषु नक्षत्राणां प्राधान्यं सूचितम्। तान्येवेह प्रत्यक्षतो दृश्यन्ते। मुहूर्तप्रश्नादिषु जन्मविपत्प्रत्यरिवधजन्माष्टमराशितारावैनाशिकर्क्षादयो तैरेव प्रयोगितया निगद्यन्ते।

नवर्क्षचरणा इत्यनेन नवांशकानां प्राधान्यं सूचितम् । चक्रस्थिता इति राशीनां समुदायवशादेवं लग्नं प्रवहाक्षेमादेव न विशेषाश्च लग्नं राशीनां चक्रस्थिता इति चक्रवत्स्थिताः कुलालचक्रवत्तेषां समुदायसंस्थानम् अपमण्डले । तथाचार्यभटः-

"मेषादेः कन्यान्तं सममुदङ्मण्डलार्द्धमपयातम् ।
तौल्यादेर्मीनान्तं शेषार्द्धं दक्षिणेनैव ॥" इति ।

ग्रहाश्चार इति सूचितम् ।

चक्रस्थिता इत्यनेन भूचक्रसंस्थानमपि सूचितम् । मेषवृषौ प्राच्याम् । मिथुनमाग्नेय्याम् कर्किसिंहौ दक्षिणस्याम् । कन्या नैर्ऋत्याम् । तौलिवृश्चिकौ पश्चिमायाम् । धनुर्वायव्याम् । मकरकुम्भावुत्तरस्याम् । मीनमैशान्यामिति भूचक्रसंस्थानम् ।

"प्राच्यादिगृहे क्रियादयो द्वौ द्वौ कोणगता द्विमूर्तयः ।" इति ।

वक्ष्यति चैतद्भूचक्रसंस्थानं दैवज्ञस्य समंताद्व्याप्तम् । अस्मिन् भूचक्रे यत्र प्रच्छकस्थितिः स राशिरारूढसंज्ञकः । प्रच्छके राशिचक्रं विलिख्य प्रागादिषु दिक्षु मेषादिराशीनुत्पाद्य तेषु राशिग्रहनक्षत्रादीन्सम्पूज्य प्रच्छकस्तेष्वेकं राशिं स्पृशेत् । तद्राशिं लग्नं कल्पयित्वा सर्वफलानि निरूपयितव्यानि । प्रच्छकारूढराशौ विज्ञाते स एव राशिरारूढत्वेन ग्राह्यः । प्रच्छकदैवज्ञयोः फलजिज्ञासायां पृच्छायामसत्यामपि दर्शनादेव फलं चिन्तनीयम् ।

तथा च वसिष्ठः-

"अपृच्छतः पृच्छतो वा जिज्ञासोर्यस्यकस्यचित् ।
होराकेन्द्रत्रिकोणेभ्यो शुभाऽशुभफलं वदेत् ॥" इति ।

शुभदिवसे ग्रहनक्षत्रराश्यादीन्संपूज्य दैवज्ञाय प्राभृतकं समर्प्य पृच्छत एवं दैवज्ञेन शुभाशुभं निरूपणीयम् अन्यथा न परमार्थफलविज्ञानसिद्धिः । शास्त्रनिराशोऽपि संपद्यते तस्माद्धर्मत्वं जायते । तथा चोक्तं मनुना-

"नापृष्टः कस्यचिद्ब्रूयान्नचाऽन्यायेन पृच्छतः ।
विजानन्नपि मेधावी जडवल्लोक आचरेत् ॥"

भट्टोत्पलेनाऽप्युक्तम्-

"रम्यतले भूभागे सम्पूज्य ग्रहगणं सनक्षत्रम् ।
पश्चात्प्रश्नविधानं कुर्याद्येनाप्नुयात्सिद्धिम् ॥
प्रष्टा मणिकनकयुतैः फलकुसुमैः राशिं विवाहकाल्पिते काले ।
सुखासीनं सुखप्रियं दैवज्ञं भक्तितो नत्वा ॥
सम्पूज्य च यथाबलमुडुनिनामनी चोक्ता संपृच्छेत्स तु दैवतम् ॥"

"राशिग्रहर्क्षभानि भवनं चैकार्थसंप्रत्यये ।" इति ।

एतत्पडेकार्थसंप्रत्यये वर्तन्ते प्रत्ययो ज्ञानं संप्रत्ययः संज्ञानम्। तथा च हलधरः–
"प्रत्ययोधीनविश्वासशपथज्ञाननिश्चयाः ॥" इति।

राशिपर्यायाणां पट्तया पड्राशयश्चिन्त्याः जातकेषु लग्नराशिरेकः, अपरश्चन्द्राधिष्ठितराशिः तयोरधिपतिस्थितराशिश्च। चन्द्रलग्नांशराशी चेति। प्रश्नादौ स्वेकस्तावदुदयः। अपर आरूढः। तृतीय उदयनवांशराशिः। चतुर्थश्चन्द्रराशिः। पञ्चमः पूर्णांशराशिः। पष्ठश्चन्द्राधिष्ठितराशिः। षड्भिरेतैः फलं निरूप्यत इति। एकार्थसंप्रत्यये एकस्यार्थस्य निर्णये पड्राशयश्चिंतनीया इति च सूचितम्। पड्वर्गफलबलं निरूपणीयमिति ॥ ४ ॥

(वसंततिलका)

मत्स्यौ घटी नृमिथुनं सगदं सवीणं
चापी नरोऽश्वजघनो मकरो मृगास्यः।
तौली ससस्यदहना प्लवगा च कन्या
शेषाः स्वनामसदृशाः स्वचराश्च सर्वे ॥ ५ ॥

अपिना भावसिद्धेनाक्षेपेणात्रान्वयो निर्वहणीयः। मीनो राशिर्मत्स्यौ मुखपुच्छप्रतिबंधमत्स्यद्वितयाकारः। कुंभराशिः घटी, स्कन्धन्यस्तरिक्तघटः पुरुषः। सगदं सवीणं नृमिथुनं, गदाहस्तपुरुषः वीणाहस्ता नारी च। नवमो राशिश्चापी, धनुर्धरोऽश्वाकारोऽधःशरीरार्द्धो नरः। दशमो राशिर्मृगाकारपूर्वार्द्धः मकराकारोपरार्द्धः। सप्तमो राशिस्तुलाधरः पुरुषः। षष्ठो राशिः प्लवगा ससस्यदहनेन च सहिता कन्यका। शेषाः स्वनामसदृशाः। तत्र प्रथमो मेषाकारः, चतुर्थः कर्कटाकारः, पञ्चमः सिंहाकारः, अष्टमो वृश्चिकाकारः। सर्वे स्वचराश्च। सर्वे मेषादयो द्वादशराशयः स्वाकारसमुचितदेशचारिणस्ततो मेषो दिवा वनचरः रात्रौ ग्रामचरः तद्वद्वृषभः क्षेत्रचरश्चेत्यादिप्रदेशः। नष्टद्रव्यचोरादिस्थानज्ञानार्थमवगन्तव्यः।

अथोक्तानां राशीनां स्वभावाकृतिस्थानान्याह–मत्स्यौ घटीति संज्ञामात्रेण मेषादिराशयो लोकप्रसिद्धास्तेषां मेषादीनां नामानि न केवलं संज्ञामात्रप्रयोजनानि रूपानुरूपाणीत्युपदिश्यन्ते। शेषाः स्वनामसदृशा इति लोकप्रसिद्धाः। येषां नामश्रवणे अशेषाणां विशेषो नावगम्यते स एवात्रोपदिश्यते।

मत्स्याविति मीनराशिरित्युक्ते तस्य द्वित्वं न प्रतिभाति द्वित्वप्रतिभानाय मत्स्याविति द्विवचनम्। "लग्नं समेत्युभयतः पृथुरोमयुग्मम्।" इति वक्ष्यति तेनान्योन्यपुच्छाभिमुखमत्स्ययुगलं मीनराशिरिति च सिद्ध्यति। घटात्पनन

कुम्भराशेराकृतिरुच्यते । घटोऽस्यास्तीति घटी तस्मात्स्कंधविन्यस्तरिक्तघटः पुरुषः कुम्भराशिरिति च सिद्धयति । नृमिथुनमिति तृतीयो राशिः नरमिथुनं नारीनरौ सगदं सवीणमिति सगदः पुरुषः सवीणा नारीति योग्यतया विज्ञायते । चापी नरोऽश्वजघन इति धनराशिः चापोऽस्यास्तीति चापी धनुष्मान्पुरुषोऽश्वजघनः अश्वस्तुरगस्तस्य जघनमिव जघनं यस्य सोऽश्वजघनः नवमराशेरूर्ध्वभागश्चापपाणिर्मनुष्यः, अधोभागस्तुरग इत्युक्तं भवति । मकरो मृगास्यः पूर्वभागो मृगास्याकृतिः अपरभागो मकर इति सिद्धं भवति । तौली तुलाधरः पुरुषः । ससस्यदहना प्लवगा च कन्या, सस्यं दहनं च दधाना प्लवगा नौस्था इति जले, शेषाः स्वनामसदृशा इति मेषसिंहकुलीरकीटाः । मेषो मेषाकृतिः वृषो वृषाकृतिः । कर्किः कुलीराकृतिः । वृश्चिको वृश्चिकाकृतिः । स्वभावाश्च नामसदृशाः । मत्स्यौ घटीत्यनेन श्लोकेन लोकप्रसिद्धो नावगन्तव्यो विशेष उच्यते चेत्तादृशं विशेषणं मीनादिराशीनां न विदुः विशेषोस्त्येव । मीन इत्युक्ते मीनयुग्ममिति न वेदितव्यं वेदितव्यमेव "लग्नं समेत्युभयतः पृथुरोमयुग्मम्" इति स्वयमेव वक्ष्यति, तस्य नामश्रवणेन रूपसिद्धिर्न स्यात् तदेवं बहुषु नामसु सत्सु केवलत्वमनेनैवाचार्येणैव कथितम् । कल्याणवर्मणाप्युक्तं तथा च तद्वाक्यम्-

"कुम्भः कुम्भधरो नरोऽथ मिथुनं वीणागदाभृन्नरौ
मीनो मीनयुगं धनुश्च सधनुः पश्चाच्छरीरे नरः ।
एणास्यो मकरः ससस्यदहना कन्या च नौस्था जले
शेषो राशिगणः स्वनामसदृशो धत्ते तुलाग्रं तुला ॥ " इति ।

स्वभावास्तु स्वचराश्च सर्वे स्वचराः स्वस्थानचराः स्वेस्वे स्थाने चरंति । अथवा स्वचराः स्वभक्षाः 'चरगतिभक्षणयोः' इति धातुः । मेषस्तावत्कटुकोष्णादिभक्षणः । वृषस्तृणभक्षणः । मिथुनराशिरन्नपानादिलेह्यादिभक्षणः । कुलीरो मत्स्यादिभक्षणः । सिंहो मृगमांसादिभक्षणः । इत्याद्याकृतिसदृशानि भक्ष्याणि कल्प्यानि, स्वभावश्च तद्वत् । तथाहि मेषस्तावत्संचारशीलः, शीघ्राशनः, कुनखः तोयभीरुः कामीत्यादि । वृषः मन्दगामी, पृथुवक्त्रः, दीप्तोदराग्निः, क्लेशसहिष्णुरित्यादि । मिथुनो राशिस्तु गेयवाद्यकलाविद्यासु कुशलः, निधुवननिपुणः, हास्येङ्गितज्ञः, नृत्यज्ञः, भोजनतत्पर इत्यादि । कुलीरस्तु वक्रगतिः, जलतत्परः, जलाशयनिर्माणशील इत्यादि । सिंहस्तु पृथुवदनः, स्त्रीद्वेषी, तीव्रात्मा, मांसादिभक्षणतत्परश्च, गुहानिवासशीलः, उदरदन्तादिरोगपीडः, पराक्रमगर्वाधिकः, क्षुत्तृषार्दित इत्यादि । कन्याराशिस्तु सुरतप्रियः, लज्जान्वितः, परगृहवासी, प्रियभाषी इत्यादि । तुलाराशिस्तु क्रयविक्रयकुशलः, कृशचलदेहः, अर्थपतिः, वाणिज्यतत्पर इत्यादि । वृश्चिकराशिस्तु विषधरः,

श्वभ्रचरः, क्रूरचेष्टः इत्यादि । धनूराशिस्तु कुब्जांगः, सहायापेक्षी, समरोत्सुकः, धन्वापरार्द्धे तु दीर्घमुखः, वीर्यान्वितः, स्थूलदन्तः; राजसन्निधिनिवासशीलः इत्यादि। मकरराशिस्त्वधःकाये कृशः, सुन्दरनेत्रः, अल्पस्पृक्, शीलता इत्यादि । कुम्भस्त्व-ल्पजलार्थी, पृथुरूपः, भारवाहीत्यादि । मीनराशिस्तु मनोज्ञदेहः, बृहच्छिराः सुन्दरनेत्रः, जलचरद्रव्यभोक्तेत्यादि ।

मेषवृषादिजन्तूनां स्वभावानन्यांश्च लोकतः शास्त्रतश्च विज्ञाय फलनिरूपणे योजयेत् ।

अत्राचार्येण राशीनां चतुष्पदमनुष्याम्बुचरसरीसृपयोनित्वं पौरग्रामारण्यत्वं च खचरांश्च सर्वं इत्युक्तत्वात्सिद्धं भवतीति अतो नोक्तम् । मेषवृषौ चतुष्पादाविति को न जानाति । अश्वजघन इत्युक्तत्वाद्धनुषोऽन्त्यार्द्धस्य साश्वत्वाच्चतुष्पदत्वं केन न ज्ञायते । मकरपूर्वार्द्धस्य मृगास्यत्वात्तस्यापि चतुष्पात्त्वं न वक्तव्यम् । मिथुनकन्या-चापाद्यर्द्धकुम्भानामप्युक्ताकृतिविशेषान्मनुष्यत्वमवगंतव्यम् । कर्कस्य कुलीरत्वात्कीटस्य वृश्चिकत्वादन्त्यस्य मीनत्वाच्च सरीसृपत्वमूह्यम् । कुलीरमकरान्त्यार्द्धमीनाना जलनिलयत्वाज्जलराशित्वमपि केन नावगम्यते तौलिराशेर्वणिक्त्वात्कन्याराशेर्नौस्थत्वान्नवमराशेर्धनुर्धरत्वाद्राजसंनिधिनिवासाच्च पौरत्वं केन न वक्तव्यम् । नार्य्यपि कदाचिन्नावमारोहतीति न चित्रम् । मेषवृषमिथुनकुम्भानां ग्रामवासित्वमपि लोके दृश्यत इति नोक्तम् । मृगपतिमकरार्द्धयोराकृतिकथनादेवारण्यत्वमुक्तम् । तथा च कृष्णाचार्येणैतत्सर्वं स्पष्टतरमुपदिश्यते—

"मेषो वृषोथ सिंहस्तुरगान्त्यार्द्धं मृगस्य पूर्वार्द्धम् ।
योनिश्चतुष्पदानां मध्ये जनुषो भवेन्मर्त्यः ॥
कन्याघटमिथुनतुलाहयार्द्धमाहुर्मनुष्ययोनिरिति ।
कर्कटझषकुंभचरा मृगापरार्द्धं च जलयोनिः ॥
वृश्चिककुलीरमीनाः सरीसृपाणां वदंति योनिरिति ।
मृगपतिमकराद्यर्द्धावारण्यौ सर्वभावेषु ॥
अरण्यमिति च मेषं वदंति होराविदः केचित् ।
कन्यातुले च तुरगो राशिषु पौरा विनिर्दिष्टाः ॥
मेषवृषकुम्भमीना ग्राम्या इति सूरिभिः समाख्याताः ॥" इति ।

'मत्स्यौ घटीति' विलोमोक्त्या कश्चिद्विलोमतो निरूपणीय इत्युक्तं भवति । स्थानविधिस्तु मेषादीनां जन्तूनां यानि निवासस्थानानि लोकेषु दृश्यन्ते तान्येवात्र निरूपितव्यानि । राश्याकृतिस्थानस्वभावकथनस्य प्रयोजनं तु यत्रयत्राकृतिस्वभाव-

विशेषापेक्षा जन्तूनां स्थानविशेषपरिज्ञानापेक्षा च विद्यते तत्रतत्रानेन विधिना विनियोगः। शुभनिमित्तोप्यनेन श्लोकेन मत्स्याविति सूच्यते।

जलचरो मत्स्ययुगलम्। घटीति पूर्णकुंभधरः। नृमिथुनमिति नरयुगलं, सगदं सवीणमिति गदाखड्गादिस्वकीयायुधधारी पुरुषः, सवीणमिति वीणावेणुमृदङ्ग-शंखपटहाद्यं तन्नादः। चापी नरो चापधरः पुरुषो विशेषायुधभृत्सुशस्तः, अश्वजघनो ऽश्वारूढः। मकरः पृथुरोमा सभेदः मृगास्यः मृगाणामपृष्ठभागदर्शनम्। तौलिः श्रीमान्वर्द्धमानो वणिक्। ससस्यदहना सस्यादिद्रव्याणि दहनशब्देन ज्वलदग्निः नावाभिमुख्यकन्या मङ्गलानि निमित्तानि। शेषाः स्वनामसदृशाः नामश्रवणेन दर्शनेन वा दृङ्मनसोर्यत्र प्रसादो भवति तन्निमित्तन्तु शुभम्। तथा च भट्टोत्पलः-

"दृङ्मनसोः प्रीतिकरं प्रश्ने यद्दर्शनं च यच्छ्रवणम्।
माङ्गलिकं द्रव्याणां भवति शुभं निर्दिशेत्तत्र॥" इति।

नामशब्देन गौणनामानि गृह्यन्ते एतदुक्तं भवति भाववाचिनां शब्दानामपि नामत्वं परिणमति। यथा द्वैधीकरणक्रियायां छेदनमिति नाम विदारणक्रियां भिदा इतिनाम, तथासति छेदनं प्रश्नकाले दृश्यते चेत्प्रष्टुः कार्यस्यापि तत्सादृश्यं भवति विनाशो भवतीत्यर्थः। एवं येये शब्दाः क्रियावाचिनश्च शुभा अशुभाश्च ते सर्वे प्रश्नकालेऽवश्यमवगन्तव्याः। शेषाः स्वनामसदृशा इति वचनादपि च स्वनामसदृशाः स्वस्वसंज्ञासदृशाः। पुंनामानः पुंसां स्त्रीनामानः स्त्रीणां शुभाः। एतदुक्तं भवति दक्षिणभागः पुरुषभागः वामभागः स्त्रीभागः। महादिशश्चतस्रः पुरुषाणां, विदिशश्चतस्रःस्त्रीणां शुभं भवति। गर्भप्रश्ने प्रष्टुः पुंनामकथने पुरुषो जायते, अन्यथा स्त्री जायते इति निरूपणीयम्। स्वचराश्च सर्वे इति प्रश्नकाले यदुक्तं यद्दृष्टं यच्छ्रुतं तत्सर्वं सादृश्येन प्रष्टुर्वदेत्। स्वचराः स्वपक्षचरा एतदुक्तं भवति। विवाहप्रश्ने यादृशी तत्र दृश्यते तादृश्याः कन्यकायाः विवाहः। संततिप्रश्ने यादृशः पुरुषो दृश्यते स्त्री वा तादृशः पुरुषोऽङ्गना चेति वक्तव्या। ननु मत्स्यौ घटीत्यादि श्लोकेन शुभनिमित्तमपि सूच्यते इति यदुक्तं तत्केनावगम्यते एते शुभनिमित्ता इत्यनुक्तत्वादुच्यते स्वचराश्च सर्वे इत्यनेन कथमवगम्यते एते शुभा इति। स्वचराः स्वकीयचराः स्वाभिमितार्थगमकाः इत्यर्थः॥ ५॥

( त्रोटकः )

क्षितिजसितज्ञचन्द्ररविसौम्यसितावनिजाः
सुरगुरुमन्दसौरिगुरवश्च गृहांशकपाः।

अजमृगतौलिचन्द्रभवनादिनवांशविधि-
र्भवनसमांशकाधिपतयः स्वगृहात्क्रमशः ॥ ६ ॥

क्षितिजसितज्ञाद्यो गृहांशकपा भवन्तीति शेषः। क्षितिजो मेषराशेर्मेषनवांशकस्य मेषद्वादशांशकस्य चाधिपतिर्भवति। सितो वृषराशेर्वृषनवांशकस्य वृषद्वादशांशकस्य चाधिपतिर्भवतीत्याद्यनुसंधेयम्। नवांशाधिपतिरजमृगतौलिचन्द्रभवनादिरिति संबंधः। मेषराशौ मेषादिचापान्तानां नवांशानां संभवात्। वृषभे मकरादिकन्यान्ताः। मिथुने तुलादिमिथुनांताः। कर्कटे कर्कटादिमीनांता नवांशा भवेयुरित्यनुवादः। अतो मेषादिचतुष्के षट्त्रिंशन्नवांशकाः। राशेर्नवर्क्षचरणत्वादेको नवांशकः एकं नक्षत्रचरणम्। ततो मेषवृषमिथुनकर्कटनवांशकात्मकमश्विनीनक्षत्रम्। सिंहाद्यंशचतुष्कं भरणी, चापाद्यंशचतुष्कं कृत्तिकानक्षत्रमित्यादिफलाः कुजस्य भावस्थस्य सेनाधिपतित्वादजमृगतौलिचन्द्रभवनादित्यत्र चन्द्रभवनस्य कर्क्यादीनि स्वल्पशब्दवाच्यत्वे चन्द्रभवनप्रयोगात्कोऽप्यभिप्रायो गम्यते। मत्स्यौ घटीतिग्रन्थेन निर्दिष्टस्वरूपाणां राशीनां स्वाधिपतिग्रहैर्भूतैः फलनिरूपणे चन्द्रोऽपि विशेषान्निरूपणीय इति सूचितम्।

"भवनसमांशकाधिपतयः स्वगृहात्क्रमशः।"

द्वादशांशकाधिपतयः स्वगृहात्क्रमश इति। मेषे मेषांशात्प्रभृतीत्यादि, तेषामधिपाः पूर्वोक्ता इति। सुरगुरुमन्दसौरिगुरवश्चेत्यत्र विलोमेन सृष्टिक्रमः सूचितः। मीनराशेर्गुरुराधिपतिर्गुरोराकाशो भूतम्। कुम्भस्य मन्दोऽधिपतिस्तस्य वायुभूतम्। मकरचापयोस्तयोरेकाधिपतित्वात्पुनरुक्त्या तौ गृहीतौ। वृश्चिकस्य कुजोऽधिपतिः कृत्तिकानक्षत्रमित्युक्तं भवति। एवं नवनव नक्षत्राणि षट्त्रिंशद्भिर्नवांशकैर्भवन्ति। भवनसमांशकाधिपतयः द्वादशांशकाधिपतयः स्वगृहात्क्रमशो भवंति स्वंस्वं राशिमारभ्य द्वादशांशका भवंतीत्यर्थः। मेषे मेषादिमीनान्तः। वृषे वृषादिमेषान्तः। इत्यादि। अत्राह गोविन्दः—

इदानीं राश्यधिपानाह—क्षितिजेत्यादि क्षितिजाद्यो गुर्वन्ताः गृहांशकपाः, गृहाणाम् अंशकानां च पतयः। मेषाश्विप्रथमा इति, मेषस्य प्रथमोक्त्या मेषाधिराश्यधिपा इति वक्तव्यम्। अजमृगतौलिचन्द्रभवनादिर्नवांशविधिरित्यजादिचापान्तो मेषनवांशविधिः। मृगादिकन्यान्तो वृषे। तुलादिमिथुनांतो मिथुने। कुलीरादिमीनान्तो कर्कटे नवांशविधिः। पुनरप्येवमेव राशीनां नवांशकानामधिपा उक्ता अनेनैव हि सर्वत्रोपयोगः। तथा च सारावल्याम्—

"भवनाधिपैः समस्तं जातकविहितं विचिंतयेन्मतिमान्।
एभिर्विना न शक्यं पदमपि गन्तुं महामतिभिः॥" इति।

गृहांशकपाः इति। गृहानंशकांश्च पान्तीति गृहांशकपाः। गृहशब्देन राशीनां जडत्वं सूचितम्। अधिपशब्देन ग्रहाणां चैतन्यत्वं सूचितम्। यथा कश्चित् पुरुषः स्वगृहाधिपतिर्भवति तथैव राश्यधिपो ग्रहो भवति। अधिपदौर्बल्येन राशेरपि दौर्बल्यं भवति। अधिपतेः प्राबल्ये राशेरपि प्राबल्यं भवति। तथा च शास्त्रान्तरे–

"लग्ने लग्नपतौ बलेन सहिते तत्तुल्यवीर्यं विदु-
स्तत्रैवोपचयस्थिते सति ततो वीर्योत्कटं जायते॥" इति।

गृहांशकपाः इति समस्तपदकथनाद्राश्यंशाधिपयोः फलदाने बलवतः कर्तृत्वम्। 'बलयोगात्फलमंशकर्क्षयोः' इति वक्ष्यति च। राश्यंशाधिपयोर्भेदाभावोऽपि समासोक्त्या सूचितम्।

यथा मेषलग्ने मेषेण तदधिपतिना भौमेन च फलं निरूप्यते तथा स्थितिरववंतव्या 'वृत्ताताम्रदृग्' इत्यादिश्लोके मानी अस्थिरधनः सेति। तस्याग्निर्भूतम्। तुलायाः शुक्रोऽधिपतिस्तस्य जलं भूतम्। कन्याया बुधोऽधिपतिस्तस्य पृथिवी भूतम्। एवं भूतसृष्टिक्रमः। तथा च श्रुतिः–

"आकाशाद्वायुर्वायोरग्निरग्नेरापः अद्भ्यः पृथिवीत्यादि" कालचक्रदशा सूच्यते। क्षितिजाद्यष्टपदानां समासः। सुरगुर्वादिचतुर्णां समासस्तेन दक्षिणर्क्षेषु मेषादिमीनान्तं क्रमेण गणनीयम्। वृश्चिकादिचापान्तं व्युत्क्रमेण गणनीयम्। तदर्थं क्षितिजाद्यष्टपदच्छेदः कृतः। वामर्क्षेषु चापादिवृश्चिकान्तं क्रमेण गणनीयम्। मीनादिमेषान्तं व्युत्क्रमेण गणनीयम्। इत्युक्तं भवति। तदर्थं सुरगुरुमंदसौरिगुरवश्चेति पृथक् समासः। अजमृगतौलिचन्द्रभवनादिनवांशविधिरिति दशापहारः कथितः। मेषत्रिकोणराशीनां मेषादिनवांशकाधिपा दशापहर्तारः। वृषत्रिकोणराशीनां मृगादिनवांशाधिपा दशापहर्तारः। मिथुनत्रिकोणराशीनां तुलादिनवांशाधिपा दशापहर्तारः। भवनसमांशकाधिपतय इति। मेषादारभ्य मीनान्तं गणिते सति पुनरेव वृश्चिकादिव्युत्क्रमेण गणनीया इत्युक्तं भवादि कालचर्याकृतः॥ ६॥

मत्ता
वचराः

( पुष्पिताग्रा )

कुजरविजगुरुज्ञशुक्रभागाः
पवनसमीरणकौर्प्यजूकलेयाः।
अयुजि युजि तु भे विपर्ययस्थाः
शशिभवनालिझषान्तमृक्षसंधिः॥ ७॥

अथ त्रिंशांशकानाह–अयुजि पवनसमीरणकौर्प्यजूकलेयाः कुजरविजगुरुज्ञशुक्रभागाः भवन्ति । ओजराशौ पंचभागाः प्रथमं कुजस्य । ततः पंच शनेः । ततोऽष्टौ गुरोः । ततः सप्त बुधस्य । ततः पंच शुक्रस्येत्यर्थः । ते युजि विपर्ययस्थाः, युग्मराशौ ते ग्रहांशा उक्तविपर्ययेण, प्रथमं पंचांशाः शुक्रस्य । ततः सप्त बुधस्य । ततोऽष्टौ गुरोः । ततः पंच शनेः । ततः पंच कुजस्येति यावत् । शशिभवनालिझषान्तमृक्षसन्धिर्भवतीति । कर्कटवृश्चिकमीनानामन्त्यमृक्षयोः राशिनक्षत्रयोः सममसितत्वादृक्षसन्धिर्भवति ।

अथास्मिन्राशिचक्रे त्रयः खण्डा अत्रान्तशब्देन यस्य कस्यचिदवसाने वक्तव्ये कर्कटवृश्चिकमीनाः निरूपणीया इत्युक्तं भवति ।

गोविन्दः–अथ त्रिंशांशकानाह–कुजरविजेत्ययुजि पवनसमीरणकौर्प्यजूकलेयाः संख्याः कुजरविजगुरुज्ञशुक्रभागाः । युजि तु ते विपर्ययस्था उक्तांशसंख्याभेदा ग्रहाश्च विपर्ययेण स्थिताः । शुक्रज्ञगुरुशनिकुजांशाः क्रमेण ज्ञेयाः युग्मराशावित्यन्यदर्थान्तरं चिन्त्यम् ।

यस्य त्रिंशांश उदितस्तद्दशाद्भवनादिष्ववकाशोऽवगन्तव्यः । कुजरविजयोः शुक्रस्याप्यल्पोऽप्यवकाशः । तथा कृष्णीये–

"ग्रहभागेष्ववकाशो भोजनविविशयनमैथुनादि पुनः ।
वाच्यो वर्णोत्कर्षो विमार्दीनां पुरोक्तानाम् ॥" इति ।

पुनरपि त्रिंशांशैः प्रयोजनमुपरिष्टाद्वक्ष्यति । शशिभवनालिझषांतमृक्षसंधिः । नक्षत्रराश्योर्युगपच्छेदस्थानं गण्डान्तसंज्ञः । अन्त्यशब्देनाशुभत्वं सूचितम् । तथा च सारावल्याम्–

"जातो न जीवति नरो मातुरवश्यं भवेत्स्वकुलहंता ।
यदि जीवति गण्डान्ते बहुगजतुरगो भवेद्भूपः ॥" इति ॥ ७ ॥

(आर्या)

वृषो. क्रियतावुरिजितुमकुलीरलेयपाथोनजूककौर्प्याख्याः ।
इद. तौक्षिक आकोकेरो हृद्रोगश्चान्त्यभं चेत्थम् ॥ ८ ॥

मेषादीनां पारिभाषिकाणि संज्ञान्तराण्याह–मेषादयः क्रमशः क्रियादिसंज्ञकाः
दिवापान्त्यो। गोविंदः संज्ञाविधानमाह–क्रियेति । मेषादीनां क्रियादयः संज्ञा उक्ताः ।
वृषादिमीनानां समासस्तौक्षिकादयो व्यस्ताः । तेनायं प्रोक्तस्तेनायमर्थः सूचितः ।
उक्ता अर्केन्दिचतुर्भावस्यापेक्षत्वमात्मनो धर्मसापेक्षत्वम्, धनस्य प्रवृत्तिसापेक्षत्वम् ।
योगमसापेक्षत्वम् । सुखस्य च धन सापेक्षत्वम् । पुत्रसिद्धेर्धर्मसापेक्षत्वं

शत्रुक्षयस्य प्रवृत्तिसापेक्षत्वम् । फलत्रसुखस्यार्थागमसापेक्षत्वं, मरणरोगपरापवादादेः पापार्थनाशसापेक्षत्वम् एवं चतुर्भिः श्लोकैः राशिनामरूपप्रतिपादनं कालपुरुषस्य देहं चोक्तम् ॥ ८ ॥

( इन्द्रवज्रा )

द्रेष्काणहोरानवभागसंज्ञास्त्रिंशांशकद्वादशसंज्ञिताश्च ॥
क्षेत्रं च यद्यस्य स तस्य वर्गो होरेति लग्नं भवनस्य चार्द्धम् ॥९॥

षड्वर्गानाह-द्रेष्काणहोरानवभागसंज्ञाः त्रिंशांशकद्वादशसंज्ञकाश्च क्षेत्रं चैतेषु षट्सु यद्यस्य स तस्य ग्रहस्य वर्गो भवतीति यावत् । होरेति लग्नं भवति, तस्यार्द्धश्च होरेत्युदयलग्नस्य राश्यर्द्धस्य च संज्ञेति यावत् । अत्र कालपुरुषदेहप्रतिपादनानन्तरमुक्तानां षड्वर्गाणां द्रेष्काणादिक्रमेणोक्त्या कालपुरुषस्य मूलाधारादिषडाधाराः क्रमेण सूचिताः-

"मूलाधारे दृकाणः स्यात्पितृचिंता रविस्तथा ।
स्वाधिष्ठाने तु होरा स्यान्मातृचिन्ता तथा शशी ॥
मणिपूरे नवांशः स्याद्भ्रातृचिन्ता कुजस्तथा ।
अनाहते च त्रिंशांशे वाणीचिंता बुधस्तथा ॥
विशुद्धौ द्वादशांशः स्यात्पुत्रचिन्ता तथा गुरुः ।
आज्ञायां क्षेत्रमुद्दिष्टं जायाचिन्ता सितस्तथा ॥
द्वादशांशे शनैश्चारी नाशचिन्ता चिकीर्षिता ।
तत्रस्थैस्तदधीशैश्च बलाबलवशात्फलम् ॥ " इति ।

तत्र दिङ्मात्रमित्यवगन्तव्यम् ।

गोविंदश्च-वर्गसंज्ञामाह-द्रेष्काणादयः षट् कथितास्तेषु यद्यस्य स तस्य वर्गः । वर्गशब्देनोक्ता द्रेष्काणादयः षडपि ज्ञेया बुद्धीन्द्रियादिः । दशकाः ।

"प्राणोऽपानः समानश्चोदानव्यानौ च वायवः ।
नागः कूर्मश्च कृकलो देवदत्तो धनञ्जयः ॥
धनञ्जयव्यतिरिक्ता नव प्राणा नवांशकाः ।
नव प्राणा मनोबुद्धीन्द्रियादिदशकात्मकाः ॥"

नवभिः प्राणैर्द्वादशभिरिन्द्रियैरप्येकविंशतिविधसूक्ष्मशरीरमुत्पद्यते । तथा चोक्तं भगवत्पादाचार्येण-

"इह तावदक्षदशकं मनसा सह बुद्धितत्त्वमथ वायुगुण इति त्रिलिङ्गमेतदमुना पुरुषः सह संगतो भवति जीवतीति । स्थूलशरीरं तु त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्रमयम् । तद्राशिसंज्ञमिति । अन्यथा केचिद्राशिः स्थूलशरीरं द्रेष्काणः शरीर-

स्योर्ध्वमध्याऽधोभागेन त्रिधा भिन्नः। होरा वामदक्षिणभेदेन भिन्ना। नवांशः। क्षेत्रज्ञो, द्वादशांशा वायुमनोबुद्धयः, त्रिंशांशकाश्चक्षुरादीन्द्रियपञ्चक इत्येभिर्लग्नान्तैः षड्भिरपि फलदो भवति।"

तथा च सारावल्याम्–

"एभिः स्पष्टतरं तं मत्यक्षपरीक्षणं यस्मात्" इति।

होरेति लग्नं लग्नबलेन सर्वभावसिद्धिश्चिन्त्या। होराशास्त्रार्थनिरूपणविषयो लग्नराशिरेक एवेति। तथा च सारावल्याम्–

"जातकमिति प्रसिद्धं यल्लोके तदिह कीर्त्यते होरा।"

तत्र जातके लग्नस्यार्द्धं फलमर्द्धं चन्द्रस्य। प्रश्नेऽप्युदयलग्नारूढयोस्तद्वत्. अतो लग्नचन्द्रयोर्बलवतोः षड्वर्गफलं होराशास्त्रेण निरूपणीयमिति सूचितम्।

(वसंततिलका)

गोजाश्विकर्किमिथुनाः समृगा निशाख्याः
पृष्ठोदया विमिथुनाः कथितास्त एव॥
शीर्षोदया दिनबलाश्च भवंति शेषा
लग्नं समेत्युभयतः पृथुरोमयुग्मम्॥ १०॥

समृगा गोऽजाश्विकर्किमिथुना निशाख्याः कथिता इत्यन्वयः। विमिथुनाः ते एव पृष्ठोदया इत्यन्वयः। शेषाः शीर्षोदया दिनबलाश्च भवन्ति। तत्र विशेषमाह– पृथुरोमयुग्मं लग्नमुभयतः समेति मुखपुच्छप्रतिबंधनादतो मीनराशिरुभयोदयः।

गोविन्दः–गोजाश्वीति। गोऽजाश्वादयः षड्राशयो निशाराशयः अन्ये शेष दिनबला दिवाराशयः इत्युक्तत्वान्निशापतेरप्येते राशयो भवन्ति।

दिनबला इत्युक्तत्वाद्दिनपतेः राशय इत्युक्तम्। तथा चोक्तम्–

"सिंहः कन्या तुलाली च कुम्भान्त्यौ सूर्यराशयः।
अन्ये च राशयश्चान्द्रा शुनिशाराशयश्च ते॥"

निशाराशयो निशाफलदाः। दिनराशयो दिनफलदा इति। पृष्ठोदया विमिथुना इति। पृष्ठेन उदयन्तीति पृष्ठोदयाः अशुभा इत्युक्तम्। शेषाः शीर्षोदयाः शीर्षेण उदयन्तीति शीर्षोदयाः। पृथुरोमयुग्मम् उभयतो लग्नं समेत्युदयतीत्यर्थः। पृष्ठोदयाः अशुभाः, शीर्षोदयाः अशुभदा इत्युक्तं भवति। तथा च कृष्णार्षे–

"पृष्ठोदयेषु सिद्ध्यत्यशुभं मूर्द्धोदयेषु शुभमुक्तम्।
उभयोदयेषु विमिश्रं ग्रहराहितेभ्यः. फलं वाच्यम्॥" इति।

ग्रहयोगे ग्रहानुगुणं फलम् । पृष्ठोदये पापसंबंधेऽन्त्यमशुभम् । पृष्ठोदये शुभसम्बन्धे मध्यमत्वम् । तद्विपरीतं शीर्षोदयेषु वक्तव्यम् पृष्ठे । उदयो येषां ते पृष्ठोदयाश्चिरेण फलदा इत्यर्थः । अन्यथा शीर्षोदयाः । अन्यदप्यस्ति पृष्ठोदयस्थानां ग्रहाणां राशिषु दशासु पृष्ठे फलोदयः । शीर्षोदयस्थानामादौ उभयोदयस्थानां मध्ये फलोदयः । वक्ष्यति च-"पृष्ठोभयकोदयर्क्षगास्त्वन्त्यांतः प्रथमेषु पाकदाः" इत्यनेन पृष्ठोदयोभयोदयमूर्द्धोदयविज्ञापनेन प्रश्नजातकेषु बहुप्रयोजनमिति ॥ १०॥

( मन्दाक्रान्ता )

क्रूरः सौम्यः पुरुषवनिते ते चरागद्विदेहाः
प्रागादीशाः क्रियवृषनृयुक्कर्कटाः सत्रिकोणाः ॥
मार्तण्डेन्द्वोरयुजि समभे चन्द्रभान्वोश्च होरे
द्रेष्काणाः स्युः स्वभवनसुतत्रित्रिकोणाधिपानाम् ॥ ११ ॥

अन्यमपि राशिविशेषमाह-क्रूरः सौम्यः-ओजराशयः क्रूराः । युग्मराशयः सौम्याः । पुरुषवनिते ओजराशयः पुरुषाः, युग्मराशयस्त्रियः ते च राशयः चरागद्विदेहाः चराः स्थिरा उभयाश्च भवन्ति । पुनरपि तथैव क्रमतः । अतो मेषकर्कटतुलामकराश्चाराः इत्यादि सत्रिकोणाः क्रियवृषनृयुक्कर्कटाः प्रागादीनामिन्द्रादिदिशामीशा भवन्ति । अयुजि मार्तण्डेन्द्वोरोजराशौ राश्यर्द्धरूपा होरा प्रथमा सूर्यस्य, द्वितीया चन्द्रस्य । समभे चन्द्रभान्वोश्च समराशौ प्रथमा चन्द्रस्य होरा, द्वितीयार्कस्य । द्रेष्काणाः स्वभवनसुतात्रित्रिकोणाधिपानां स्युः राशित्रिभागरूपेषु द्रेष्काणेषु प्रथमस्तद्राश्यधिपस्य । द्वितीयः पंचमराश्यधिपस्य । तृतीयो नवमराश्यधिपस्य । मेषाश्चिप्रथमा इत्युक्तमत्र चिन्त्यम् । मेषाद्योजराशयः क्रूराः । वृषादियुग्मराशयः सौम्याः । ओजराशिषु जाताश्चिन्तिता वा पुरुषाः क्रूरा भवन्ति । युग्मराशिषु जाताश्चिन्तिता वा सौम्या भवन्ति । तथा च सारावल्याम्-

"ओजेषूग्राः पुरुषाः सौम्या युग्मेषु सर्वभवनेषु । "

ओजराशिषु द्रव्याण्यपि रूक्षाणि । युग्मराशिषु द्रव्याण्यपि सौम्यानि । तथा च कृष्णीये भोजनप्रश्ने-

"ओजेषु रूक्षमन्नं द्रव्यन्तु युग्मे जलचरे वा" इति ।

तथा च सुरतप्रश्ने, ओजराशिषु विषमसंख्यं मिथुनकर्म, समराशिषु समसङ्ख्यमिति । तथा कृष्णीये-

"विषमेषु गृहराशिषु मैथुनमेकं द्विशमितरेषु" इति ।

किं बहुना सर्वपदार्थानां विषमराशिषु क्रूरत्वं समराशिषु सौम्यत्वं च वक्तव्यम्। ओजराशयः पुरुषाः, युग्मराशयो वनिताः। ओजेषु चिन्तिताः पुरुषाः, युग्मेषु स्त्रियः। ओजराशिषु जाताः सत्त्वादिगुणयुताः। युग्मराशिषु जाताश्चापल्यादिस्त्रीगुणयुताः। ओजराशिषु ग्रहबहुत्वे पौरुषयुक्तो भवति पुरुषः, विपरीते विपरीत इति। अस्योपयोगे इयान्विशेषः। जातकेषु जन्मलग्नराश्योस्तदधिपतिस्थितराश्योश्चौजयुग्मावगम्य जातानां क्रूरसौम्यत्वं पुरुषवनितात्वं च निर्णेतव्यम्। प्रश्ने तूदयारूढश्चात्र चन्द्राधिष्ठितराशिभिरेतच्चिन्त्यते इति। ते च रागद्विदेहाः, ते मेषादयश्चरस्थिरोभयाः। चरराशिषु सर्वे ग्रहा जन्मलग्ने चरस्थे चेज्जातो संचारशीलः। स्थिरराशिगताः सर्वे चेत्स्थितिशीलाः। उभयराशिषु मिश्रस्वभावाः। गोचरफलनिरूपणे चैवम्–

"जन्मलग्नतदीशेषु चरस्थेषु चरत्यसौ।
स्थिरस्थेषु स्थितो जन्तुः द्वन्द्वस्थेषूभयात्मकः॥"

प्रश्नादावपि–चरराशौ चरभूतं फलं, स्थिरराशौ स्थिरं, न वृद्धिनाशावुभयोर्मिश्रमिति। तथा च भट्टोत्पलः–

"स्थिरराशौ लग्नगते स्थानमाप्तिं वदेन्न गमनं च।
रोगोपशमो नाशो द्रव्याणां स्यात्पराभवो नात्र॥
चरराशौ विपरीतं मिश्रं वाच्यं द्विमूर्त्युदये।
स्थिरवत्प्रथमार्द्धे स्यादपरं चरराशिवत्सर्वम्॥" इति।

पुनः धातुमूलजीवाश्चरादिभिरूह्याः। चरो धातुर्धातोर्नहि स्थिरवासः। न गच्छतीत्यगः, स्थिराणि मूलद्रव्याणि। द्विदेहाः देहशब्देन जीव उह्यः इति। प्रागादीशा इति–सत्रिकोणाः क्रियवृषनृयुक्कर्कटाः, मेषसिंहचापाः प्राचीशाः। वृषभकन्यामकरा दक्षिणेशाः। मिथुनतुलाकुम्भाः पश्चिमेशाः। कर्कवृश्चिकमीना उत्तरेशाः। अनेन दिक्परिज्ञानं प्रयोजनम् तथा चोक्तम्–

"राशिभ्यः कालदिग्देशा वयो जातिश्च लग्नगात्।" इति।

प्रागादीशाः क्षत्रियादिचतुर्वर्णेशाः सत्रिकोणाः क्रियवृषनृयुक्कर्कटाः इत्युक्तं भवति। मार्तण्डेन्द्वोरिति। होराधिपत्यमुच्यते। ओजराशौ मार्तण्डेन्द्वोः होरे समभे चन्द्रभान्वोश्च। अधिपतिबलसंपूर्तावेव होरायाः फलत्वम्, अन्यथा विफलत्वम्। तदर्थं मार्तण्डेन्द्वोरिति सम्बन्धार्थे षष्ठी। क्रूरः सौम्य इति। राशीनामोजानां केवलं क्रूरत्वं, युग्मानां सौम्यत्वमूह्यमिति। द्रेष्काणाः स्युरिति स्वभवनसुतत्रित्रिकोणाधिपानां लग्नपंचमनवमराशीनामधिपानां द्रेष्काणाः। वृषे शुक्रबुधमन्दानामित्यादि। अन्यथाऽन्ये व्याचक्षते एकस्मिन्राशौ प्रथमपंचमनवमांशाधिपानां

द्रेष्काणाः। यथा मेषे कुजरविगुरूणाम्। वृषे शनिसितबुधानाम्। मिथुने शुक्रमन्दबुधानाम्। कुलीरे चन्द्रकुजगुरूणाम्। सिंहादिष्वेवमेव द्रेष्काणा इति। तथा च कृष्णीये-

"क्षितिसुतसितगुरुसौरा भृगुजबुधौ भार्गवश्च रवितनयः।
बुधचन्द्ररुधिरजीवा द्रेष्काणगणेश्वराः प्रोक्ताः॥" इति।

द्रेष्काणाः स्युरिति फलदाने शक्ता भवेयुरित्यर्थः। तस्मात् "द्वाविंशः कथितस्तु कारणं द्रेष्काणाः कथितास्तु सूरिभिः" इत्यग्रे वक्ष्यति।

प्रश्नादावपि-

"द्रेष्काणसदृशश्चौरो लग्नांशसदृशं धनम्।"

इत्याद्युक्तमाचार्येण। द्रेष्काणानां स्वरूपं 'कट्यां सितवस्त्रवेष्टितः' इत्यादिषट्त्रिंशद्भिः श्लोकैरुपरिष्टाद्वक्ष्यति तेनापि फलनिरूपणे प्राधान्यमवगन्तव्यम्॥ ११॥

( इन्द्रवज्रा )

**केचित्तु होरां प्रथमां भपस्य वाञ्छन्ति लाभाधिपतेर्द्वितीयाम्।**
**द्रेष्काणसंज्ञामपि वर्णयन्ति स्वद्वादशैकादशराशिपानाम्॥ १२॥**

होराद्रेष्काणयोः पक्षान्तरमाह-केचित्तु होरां प्रथमां भपस्य वाञ्छन्ति, भपो राश्यधिपः। द्वितीयां लाभाधिपतेः। प्रथमद्रेष्काणस्तद्राश्यधिपस्य द्वादशस्थानाधिपस्य द्वितीयः। एकादशस्थानाधिपस्य तृतीयः। अत्र गोविन्दः पक्षान्तरेण होराद्रेष्काणाधिपत्यमाह-केचिदिति। प्रथमां होरां तद्राश्यधिपतेः। द्वितीयां होराम् एकादशस्थानाधिपतेः केचिदाचार्या वाञ्छन्ति, न बहुमतामिति स्वाभिमतम्-'मार्तण्डेन्द्वोरयुजि समभे चन्द्रभान्वोश्च होरे' इति। प्रथमोक्तहोराधिपत्यविधिर्जातके पुनरुक्तः प्रश्ने इति वाऽऽचार्यमतम्। तथा चोक्तं कैश्चन-"रवीन्दू विषमे चन्द्ररवी चात्र समे क्रमात्। होरा स्याल्लग्नपस्यैव द्वितीया लाभपस्य तु॥ आद्या तु जातके प्रोक्ता द्वितीया प्रश्नकर्मणि॥" अथ द्रेष्काणसंज्ञामपि स्वद्वादशैकादशराशिपानामिति केचिदाचार्या वाञ्छन्ति। अथ द्रेष्काणाधिपत्यमपि त्रिप्रकारम्-"द्रेष्काणाः स्युः स्वभवनसुतत्रित्रिकोणाधिपानाम्" इति। अत्र स्वाधिपते राशेः प्रथमः द्रेष्काणः, द्वितीयः सुताधिपतेः तृतीयस्त्रित्रिकोणाधिपतेः इत्येकप्रकारः। चरागद्विदेहा इत्युक्तक्रमेण त्रिकोणगतचरराशिपतेः प्रथमद्रेष्काणः। स्थिरराशिपतेर्द्वितीयः। त्रिकोणगतोभयराशिपतेस्तृतीयो द्रेष्काणः। इति द्वितीयप्रकारः। द्रेष्काणसंज्ञामित्यादिना तृतीयः।(केचित्त्वित्यत्र तु शब्देन विषयविभागोऽस्तीति सूचितम्। तत्कथमिति चेदुच्यते। आद्यः पक्षो जातकविधाने। द्वितीयो जातके। तृतीयः प्रश्ने। तथा च यवनेश्वरः-

"लग्नपुत्रशुभपाश्वरे गृहे पुत्रधर्मतनुपा युगे गृहे ।
धर्मलग्नसुतपास्थिरे गृहे जातके खलु दृकाण उच्यते ॥
सर्वराशिषु दृकाण उच्यते लग्नपस्य सुतपस्य चाप्यथ ।
धर्मपस्य तु विधानकर्मणि प्रश्न एव तनुरिष्फलाभपाः ॥"

आचार्यस्य तु जातके लग्नपुत्रधर्मेशानामेव सर्वराशिषु द्रेष्काणाधिपत्यमिष्टम् । किलाचार्यस्य श्रीवराहमिहिरस्य वचनस्यापि गंभीरत्वात्केन खलु तस्याभिमेतार्थो विज्ञायते । गुरुमुखात्सम्प्रदायेन ज्ञेयम् ॥ १२ ॥

(पुष्पिताग्रा)

अजवृषभमृगाङ्गनाकुलीरा
झषवणिजौ च दिवाकरादितुङ्गाः ।
दशशिखिमनुयुक्तिथीन्द्रियांशै-
स्त्रिनवकविंशतिभिश्च तेऽस्तनीचाः ॥ १३ ॥

राशीनां ग्रहवशेन विशेषमाह-अजवृषभमृगाङ्गनाकुलीरा झषवणिजौ च दिवाकरादितुङ्गा भवन्ति । दिवाकरस्य मेषस्तुङ्गः । चन्द्रस्य वृषस्तुङ्गः । इत्यादि । उच्चभागानाह-दशशिखिमनुयुक्तिथीन्द्रियांशैस्त्रिनवकविंशतिभिश्चेति । तत्रापि तुङ्गा इत्यध्याहार्यम् । तत्र मेषे दशभिरंशैस्तुंगो दिवाकरस्येत्यादि योजनीयम् । तेऽस्तनीचाः । ते ग्रहाः अस्तो नीचो येषान्तेऽस्तनीचाः उच्चानां सप्तमराशयो नीचास्तेषां दशाद्यंशाश्चातिनीचा इत्युक्तं भवति अत्राह गोविंदः-

सूर्यादीनामुच्चान्याह-अजेति अजादिसप्तराशयो दिवाकरादिसप्तग्रहतुंगाः दशशिख्यादयोऽप्युच्चांशा इत्यर्थः । तेऽस्तनीचाः दशशिख्याद्यंशकैरतिनीचाश्चोक्ताः । अस्य श्लोकस्येन्द्रदैवत्यच्छन्दस्तेनाजवृषभादिपंचराशय एकपदेनोक्तास्तदा पंचसु ग्रहेषु तुंगगतेषु जातो दिव्यो भवतीति सूचितम् । तथा च कृष्णीये-

"सुखिनः प्रकृष्टकार्या राजप्रतिरूपकाश्च राजानः ।
एकद्वित्रिचतुर्भिर्जायन्तेऽनः परं दिव्याः ॥ " इति ।

(वसंततिलका)

वर्गोत्तमाश्चरगृहादिषु पूर्वमध्य-
पर्यन्ततः सुशुभदा नवभागसंज्ञाः ।
सिंहो वृषप्रथमषष्ठहयाङ्गतौलि-
कुंभास्त्रिकोणभवनानि भवंति सूर्यात् ॥ १४ ॥

उच्चोपदेशानंतरमुच्चतुल्यफलान् वर्गोत्तमानाह-चरगृहादिषु पूर्वमध्यपर्यन्ततो नवभागसंज्ञा वर्गोत्तमा भवंति, सुशुभदाः। शत्रुनीचांशत्वेपि वर्गोत्तमानां शुभदत्वमस्तीत्युक्तं भवति। मूलत्रिकोणत्वं च सिंहे रवेः क्षेत्रत्वं त्रिकोणत्वं च। कन्यायां बुधस्य क्षेत्रत्वं त्रिकोणत्वमुच्चत्वं चेत्यादिषु विशेषमाह-विद्यामाधवः-

"सिंहे विंशतिरादितो गवि परे सर्वेशकास्तुंगतो
मेषे द्वादश पंच योषिति परे तुंगाद्ययोगे दश॥
जूके पंच घटे तु विंशतिरमी मूलत्रिकोणाह्वयाः।" इति।

गोविंदः वर्गोत्तमांस्त्रिकोणराशीनाह—वर्गोत्तमा इत्यादि। चरस्थिरोभयेषु क्रमात्प्रथमपंचमनवमनवांशा,वर्गोत्तमा भवन्ति ते शुभदाः तथा च स्वयमेव वक्ष्यंति-

"शुभं वर्गोत्तमे जन्म वेशिस्थाने च सद्ग्रहे॥" इति।

"वर्गोत्तमस्वपरगेषु शुभं यदुक्तं तत्पुष्टमध्यलघुताऽशुभमुत्क्रमेण" इति।

मेषे मेषनवांशो, वृषे वृषनवांशो वर्गोत्तम इत्युक्तम्। अथ नवभागसंज्ञाश्च सुशुभदा इत्युक्तत्वाद्वादशांशाः शुभदा इति तर्कणीयम्। तथा च सारावल्याम्-

"वर्गोत्तमा नवांशाश्चाद्यमध्यान्तगाश्चराद्येषु।
सूतौ कुलमुख्यकरा द्वादशभागाः स्वराश्याद्याः॥' इति।

सिंहो वृष इत्यादि सूर्यादारभ्य ग्रहाणां सिंहो वृष इत्यादि सप्त त्रिकोणभवनान्युक्तम्। त्रिकोणभवनानि भवन्तीति वचनात्त्रिकोणराशीनां स्वक्षेत्रेभ्यः प्राधान्यं सूचितम्॥ १४॥

( वसंततिलका )

होरादयस्तनुकुटुम्बसहोत्थबंधु
पुत्रारिपत्निमरणानि शुभास्पदायाः।
रिष्फाख्यमित्युपचयान्यरिकर्मलाभ-
दुश्चिक्यसंज्ञितगृहाणि न नित्यमेके॥ १५॥

राशीनां प्रश्नकालविशेषविषयं विशेषमाह-होरादयो राशयस्तनुकुटुम्बसहोत्थबन्धुपुत्रारिपत्निमरणानि शुभास्पदायाः रिष्फाख्यमिति वदन्ति। अरिकर्मलाभदुश्चिक्यसंज्ञितगृहाणि उपचयानि भवन्ति। लग्नात् षडदशैकादशराशयः उपचयसंज्ञा भवन्ति। शिष्टा राशयः अपचयसंज्ञा भवन्ति। अत्र मतान्तरमाह-एके उपचयत्वं न नित्यमिति वदन्ति। "अथोपचयसंज्ञा स्यात्त्रिलाभरिपुकर्मणाम्। न चेद्भवन्ति ते दृष्टाः पापैः स्वस्वामिशत्रुभिः" इत्यादिवचनदर्शनादेवमुक्तम्। इदं वराहमिहिराचार्यस्य नाभिमतम्।

गोविन्दः-अथ होरादय इत्यनेन श्लोकेन लग्नादिद्वादशभावानां देहधनादिस्वरूपत्वमुच्यते । एतैर्द्वादशभावैः शरीरिणां प्रश्नजातकेषु समस्तपदार्थाश्चिन्त्यन्ते । अथ सम्यग्विज्ञातजन्मकालस्यैव जातकफलं चिन्त्यम् । तथा च संहितायाम्-

"तन्त्रे सुपरिज्ञाते लग्ने छायाम्बुयन्त्रसंविदिते ।
होरार्थे च सुरूढे नादेष्टुर्भारती वन्ध्या ॥" इति ।

श्रीपतिश्चाह-

"ज्ञेयोऽत्र प्रथमं हि जन्मसमयश्छायादियन्त्रैः स्फुटैः" इति ।

अत्राचार्येण सर्वशास्त्रसिद्धत्वाद्ग्रहगणिततत्त्वादिभावानयनं नोक्तं तदस्माभिः शिष्यहिताय प्रदर्श्यते ।

छायाजलयन्त्रादिभिर्दिवसे रात्रौ वा सूर्योदयादस्तसमयाद्वा जन्मनि गतनाडीविनाड्यादिकालं सम्यग्विज्ञाय लग्नमानयेत्, तत्षड्राशियुक्तमस्तलग्नम् । पुनर्मध्यलग्नमानीय तस्मिन् षड्राशियुक्तं पाताललग्नमिति । चत्वारि लग्नान्युपरि वक्ष्यति च ।

"कण्टककेंद्रचतुष्टयसंज्ञाः सप्तमलग्नचतुर्थखभानाम्" इति ।

एवं लग्नचतुष्टयेनान्यभवनानयनप्रकार उच्यते । पाताललग्नं विन्यस्योदयलग्नं विशोध्य त्रिभिर्विभज्य लब्धमुदयलग्ने संयोज्य द्वितीयभावमानयेत् लब्धं द्विगुणीकृत्योदयलग्ने,योजयेत्तृतीयभावो भवति। एवमस्तलग्नात्पातालग्नं विशोध्य पंचमषष्ठभावौ साध्यौ। मध्यमलग्नादस्तलग्नं विशोध्याष्टमनवमौ साध्यौ। उदयलग्नान्मध्यलग्नं विशोध्यैकादशद्वादशभावौ च साध्यौ । तथा चोक्तं पराशरमुनिना-

"लग्नं सुखात्सुखं कामात्कामं खात्खं च लग्नतः ।
त्यक्त्वैकद्विगुणं त्र्यंशं योज्यं लग्नादिषु क्रमात् ॥"

आसन्नभावयोर्योगार्द्धं भावसन्धिः. भावारंभभावावसानप्रदेश इत्यर्थः । पराशर आह-'अत्रापि सूर्यवारार्द्धं सन्धिः स्याद्भावयोर्द्वयोः ।एवं भावाश्च विज्ञेया संधयो वा भवन्ति हि ॥' इति । तथापि युक्तेनाप्युक्तम्-

"लग्नं पातालग्नान्मदनभवनतो वेश्मभं चैव हित्वा
कामं खान्मध्यलग्नात्तदपि च ततो रामभक्तं च शिष्टम् ।
चन्द्रद्विघ्नश्च युञ्ज्यात्तनुभवनमुखास्ते तु भावाः क्रमात्स्युः
भावपश्चाद्भावयुक्तेर्दलमथ च तयोः सन्धयः स्युः क्रमेण ॥" इति ।

भाववशाद्भावफलभेदोऽत्र यवनेश्वर आह-

"भावांशैः समतां ग्रहः खलु गतः पूर्णं विधत्ते फलं
सन्धिस्थो न फलप्रदोऽन्तरगतस्त्रैराशिकेनैव च ।
भावान्न्यूनमथ ग्रहस्य गणयेदंशाधिकं चाधिपे-
र्हत्वा चाप्यथ संधितोऽधिकमथ प्रोक्तं फलं भावजम् ॥" इति ।

चतुर्गुणितं भावग्रहान्तरं भावसाधनमित्युच्यते । एवं द्वादशभावा आनीयन्ते । होरादयस्तनुकुटुम्बेत्यादि । होरादयस्तनुः शरीरम् । कुटुम्बो भरणीयो जनः । सहोत्थो भ्राता बन्धुर्मातुलभागिनेयादयः । अरिशब्देन शत्रुरोगादिरुच्यते । पत्नी भार्या । मरणशब्देन द्रव्यनाशविपद्रोगपरापवादादिरुच्यते । शुभशब्देन भाग्यधर्मादिरुच्यते आस्पदशब्देनावलम्ब उच्यते । आयशब्देन सर्वाभीष्टागमः । रिष्फशब्देन पापरोगादिरुच्यते । इति शब्देनामी भावा एव सर्वजन्तूनां सर्वपदार्थज्ञापका इति सूचितम् ।

अरिकर्मलाभदुश्चिक्यानामुपचयसंज्ञा कृता यतः अत्र स्थिता ग्रहा उपचयकरा संपकारा अतस्तेषामुपचयसंज्ञेति । एके वर्णयन्ति । पापैः स्वाधिपातिशत्रुभिरदृष्टश्चेदुपचया अन्यथा नोपचया इति ।

"अथोपचयसंज्ञाः स्युस्त्रिलाभरिपुकर्मणाम् ।
न चेद्भवन्ति ते दृष्टाः पापैः स्वस्वामिशत्रुभिः ॥" इति ।

आचार्यस्यैतन्नैवाभिप्रेतम् ॥ १५ ॥

( वसंततिलका )

**कल्पस्वविक्रमगृहप्रतिभाक्षतानि**
**चित्तोत्थरंध्रगुरुमानभवव्ययानि ।**
**लग्नाच्चतुर्थनिधने चतुरस्रसंज्ञे**
**द्यूनञ्च सप्तमगृहं दशमर्क्षमाज्ञा ॥ १६ ॥**

लग्नादीनामेव संज्ञान्तराण्याह–होरादय इत्यनुवर्तन्ते । होरादयः कल्पादिसंज्ञावन्तोऽपि भवन्ति । लग्नाच्चतुर्थनिधने चतुरस्रसंज्ञे भवतः । सप्तमगृहं द्यूनं च भवति । दशमर्क्षमाज्ञा च भवति । गोविंदः पुनरपि भावानाह–कल्पस्वेति । कल्पः स्वस्थः । स्वं धनम् । विक्रमं पराक्रमम् । गृहं भवनम् । प्रतिभा बुद्धिः । क्षतं व्रणः । चित्तोत्थः कामः । रंध्रं विपत् । गुरुः पिता, उपदेष्टा वा । मानो मानः । भवः संसारः । व्ययो द्रव्यनाशः । लग्नादारभ्यैवं द्वादशभावाः । चतुर्थनिधनयोश्चतुरस्रसंज्ञा । दशमर्क्षमाज्ञा, दैवज्ञैः दशमेनाज्ञा चिन्तनीया । लग्नादिषड्भावा एकेन पदेनोक्ता अतः सप्तमादिषड्भावा दृश्यभागस्था इति सूचितम् । उपरितनाध्याये

पर्यायमन्यमुपलभ्य वदेच्च लोकादिति वक्ष्यति तस्मादन्यशास्त्रेभ्योऽप्येषां द्वादशभावानां पर्याया वेद्यास्तदत्रोच्यते । तथा च पराशरमुनिः ।

"लग्नाच्छरीरचिन्ता स्याद्द्वितीयात्स्वं च पैतृकम् ।
भरणीयं दृशं पापं पश्वादि च वदेद्बुधः ॥
तृतीयात्स्वोदराद्वृद्धिं दुष्पूर्वां विक्रमं विदुः ।
चतुर्थात्पितरं वेश्म सुखं क्षालित्यमेव च ॥
सौमनस्यमपत्यादि प्रज्ञां मेधां च पञ्चमात् ।
हानिं व्याधिमरिं षष्ठान्मैथुनं स्त्रीजयं ततः ॥
मृतिं पराजयं दुःखं हानिं व्याधिं तथाष्टमात् ।
सौशील्यं भाग्यधर्मांश्च नवमाद्दशमात्तथा ॥
मानास्पदाज्ञाकर्माणि लाभाल्लाभं व्ययाद्व्ययम् ॥" इति ।

जातकसंग्रहेऽप्युक्तम्-

"लग्नाच्चिन्त्यं मूर्तिकीर्तिस्थितिं च वित्तं नेत्रं वाक्कुटुम्बं च वित्तात् ।
धैर्यं वीर्यं भ्रातरं विक्रमेण विन्द्यात्क्षेत्रं वाहनं बांधवांश्च ॥
बन्धुस्थानान्मातुलं भागिनेयं तोयं वेश्माजाविकादीन्सुखं च ।
पुत्रं बुद्धिं पूर्वपुण्यत्वमान्त्यं पञ्चाद्यावीन्छात्रवं द्विड्व्रणादीन् ॥
मदनगमनजायालोकनान्यस्तभात्सु-
मरणहरणदासक्लेशविघ्नानि रंध्रात् ।
गुरुजनपरपुण्यान्यौषधं भाग्यसिद्धिं-
नवमभवनतः खान्मानकर्मास्पदाद्यम् ॥
सर्वावाप्तिं दुःखहानिं भवाख्याद्रिष्फाद्रिष्फं स्वक्षयं भ्रंशमेव ॥"

इत्यादि जातकविषये मूर्तिरमत्रं भक्ष्यं भोज्यं भोजयितृभावमुपदंशसेचनमन्नं प्रहृष्टभुक्पूर्तिकथाशयनमपि लग्नादिति । भोजनप्रश्नविषये लग्नाद्याः स्युर्भावमूर्तिः कोशो योधो वाहो मन्त्रो शत्रुर्मार्गोऽथायुः स्वान्तं व्यापारश्च प्राप्त्यमातिरिति प्रश्नविषये इत्यादि शास्त्रादवगन्तव्यम् । एषां भावानामधिपतिशुभयोगदृष्टिवशाद्वृद्धिः, पापशत्रुयोगदृष्टिवशाद्धानिः । तथा चोक्तम्-

"यो यो भावः स्वामिदृष्टो युतो वा सौम्यैर्वा स्यात्तस्य तस्यास्ति वृद्धिः ।
पापैरेवं तस्य भावस्य हानिर्निर्देष्टव्या पृच्छतो जन्मतो वा ॥" इति ।

इत्तरत्राचार्यः स्वयमेव वक्ष्यति-

"लग्नात्पुत्रकलत्रभे शुभपतिप्राप्तेऽथवालोकिते ।
चन्द्राद्वा यदि सम्पदस्ति हि तयोर्ज्ञेयोऽन्यथासम्भवः ॥" इति ।

अत्र चन्द्राद्वेति विकल्पाच्चन्द्रादपि द्वादशभावाश्चिन्त्या इत्युक्तं भवति तयोर्बलाधिकादिति सिद्धं भवति ॥ १६ ॥

(त्रोटकम्)

**कण्टककेन्द्रचतुष्टयसंज्ञाः सप्तमलग्नचतुर्थखभानाम्।**
**तेषु यथाभिहितेषु बलाढ्याः कीटनराम्बुचराःपशवश्च॥ १७॥**

पुनर्लग्नादीनां नामान्तराण्याह प्रकारान्तरेण—कण्टककेन्द्रचतुष्टयमिति तिस्रः संज्ञा भवन्ति। अत्र लग्नादीनामुभयत्र संज्ञानिर्देशेन लग्नादिभावानां तत्तत्संज्ञाविषयफलं प्रत्येकं संज्ञान्तरानपेक्षतया स्वातंत्र्यं द्योत्यते। यस्य पुरुषस्य जातकं निरूप्यते तस्य साक्षात्सम्बन्धिनः कल्पादयो भावाः परम्परासम्बन्धिनस्तन्वादय इति विशेषद्योतनाय पृथङ्निर्देशः कृतः। तद्यथा। कल्पः स्वस्थः "वार्तो निरामयः कल्प उल्लाघो निर्गतो गदात् इत्यमरः। रोगारोग्यसुखदुःखाद्यनुभवकृदन्तरात्मा कल्पः सः प्रथमभावः। स्वमात्मनो वसनाशनादिसम्पादकं धनं स द्वितीयभावः। तृतीयो विक्रमः 'विक्रमस्त्वतिशक्तिता' इत्यमरः। चतुर्थो गृहम्, आत्मनो भोजनाशनशयनाधिकरणं मन्दिरम्। पञ्चमः प्रतिभा, तत्तदुचितकार्याकार्यविशेषप्रतिभानुष्ठानम्। षष्ठभावः क्षतं, वातपित्तादिनिमित्तोऽभिघातपतनादिनिमित्तो निजागन्तुकभेदाद्विविधो व्रणः। सप्तमभावश्चित्तोत्थः, वनिताभोगादिविशेषः। अष्टमो रन्ध्रम्, आधिव्याध्याद्यनिष्टागमः। नवमो गुरुः, ऐहिकपारत्रिकसुखोपायोपदेष्टा। दशमभावो मानः, मानश्चित्तसमुन्नतिः। एकादशो भावः अर्थागमः। द्वादशो व्यय इति यावत्। एते भावा आत्मनः सम्बन्धिनः। तन्वादयस्तु परम्परया सम्बन्धिनस्तत्र पितृमातृशुक्रशोणितोद्भवस्त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्रस्वरूपः क्रिया देहस्तत्रात्मनः काष्ठाग्निवत्सम्बन्धः प्रसिद्धः प्रथमभावः। द्वितीयभावः कुटुम्बः, वसनाशनादिप्रदानेन भरणीयो वर्गः। तृतीयो भ्राता, समानोदरः सहोत्थशब्देन भ्रातृसदृशा वयस्यादयो गृह्यन्ते। चतुर्थो बन्धुः, मातुलपितृव्यादयः। पंचमः पुत्रः। षष्ठः शत्रुः। सप्तमः पत्नी। अष्टमो मरणं, प्राणवियोगावस्था। नवमः शुभं धर्मः। दशम आस्पदं, शत्रुभिरपरिभवनीयं स्थानम्। एकादशद्वादशाभ्यामायव्ययौ। येषां तन्वादीनां परम्परास्वकीयत्वेन सम्बन्धः। एवं परम्परासम्बन्धवन्तोऽन्येपि भावाः शास्त्रान्तरोक्ताभिरभितन्वादिभिः साधर्म्येणोपलक्ष्यंते। तथा हि—

"लंग्नाद्याः स्युर्भावा मूर्तिः कोशापोषौवाहोमन्त्रः।
शत्रुमार्गोऽथायुः स्वान्तधर्मो व्यापारश्च प्राप्त्यप्राप्तिः॥"

मूर्तिरमत्रमित्र्यादि । तनुशब्देनात्मशरीरार्थोऽथायुः स्वादष्टस्थानमानसम्बन्धासम्बन्धतत्स्थानदृष्टिनयथोनलात्सप्तमश्च लक्षिताः राशीनां बलाबलनिरूपणप्रकारमाहोत्तरार्द्धेन–यथाविहितेषु सप्तमलग्नचतुर्थखमेषु कीटनराम्बुचराः पशवश्च बलाढ्या भवन्ति। सप्तमे कीटराशिर्बलवान्। लग्ने नरराशिः। चतुर्थे जलराशिः। दशमे चतुष्पद्राशिरित्युक्तं भवति, तदन्तरेऽनुपातः। तत्प्रकारस्तु–कीटराशिभ्यः उदयलग्नं विशोध्य, चतुष्पदराशिभ्यो चतुर्थलग्नं विशोध्य, नरराशिभ्योऽस्तं लग्नं विशोध्य, जलराशिभ्यो मध्यमलग्नं विशोध्य बलहीना इति च सिद्धं भवति। तदन्तरेऽनुपातः। तत्प्रकारस्तु चतुष्पाद्राशिभ्यः पाताललग्नं विशोध्य षड्भाधिके चक्राद्विशोध्य भागीकृत्य त्रिभिर्भजेल्लब्धं षष्ट्यंशभूतं बलं भवति। तथाच पाराशरमुनिः–

"नृयुग्मजूकपाथोनमृगचापार्द्धकुम्भभात्।
मृगचापपरार्द्धाख्यमेषसिंहवृषादपि॥
अलिकर्कटकाच्चापि मृगपूर्वार्द्धमीनभात्।
अस्तं सुखं क्रमाल्लग्नं खं हित्वाङ्कादिके सति॥
चक्राद्विशोध्य रामैश्च भक्ता भागीकृतं बलम्।" इति।

एवं केन्द्रबलमानीयैकत्र संरक्षयेत्॥ १७॥

(वसन्ततिलका)

केन्द्रात्परं पणफरं परतस्तु सर्व–
मापोक्लिमं हिबुकमंबु सुखं च वेश्म।
जामित्रमस्तभवनं सुतभं त्रिकोणं
मेषूरणं दशममत्र च कर्म विंद्यात्॥ १८॥

केन्द्रान्तरालराशीनां संज्ञामाह–केन्द्रात्परं पणफरं भवति केन्द्रस्यानन्तरो राशिः पणफरसंज्ञः तदुत्परमापोक्लिमं भवति पणफरात्परो राशिरापोक्लिमसंज्ञ इत्यर्थः। केषांचिद्भवनानां प्रसिद्धानि संज्ञान्तराण्याह–वेश्मराशिः हिबुकमंबु सुखं च भवति। अस्तभवनं जामित्रं भवति। सुतभं त्रिकोणं भवति। दशमं मेषूरणं भवति। अत्र कर्म च विंद्याद्दशमे कर्मेति संज्ञामपि विन्द्यात्।

गोविन्दः–अथ पणफरादिसंज्ञामाह–केन्द्रादित्यादिना। केन्द्रात्परं स्थानं पणफरं द्वितीयपंचमाष्टमैकादशस्थानानि पणफरसंज्ञानि। ततः परं तृतीयषष्ठनवमद्वादशस्थानान्यापोक्लिमसंज्ञितानि। केन्द्रपणफरापोक्लिमस्थैर्ग्रहैर्बाल्यर्यौवनवार्द्धकावस्थासु फलं वाच्यम्। तथा च सारावल्याम्–

"केन्द्रात्परं पणफरमापोक्लिमसंज्ञितं तयोः परतः ।
बालयुवस्थविरत्वे भवन्ति फलदा ग्रहास्तेषु ॥" इति ।

हिबुकमम्बु सुखं च वेश्म चतुर्थस्थानसंज्ञा । जामित्रमस्तभवनम् । पुत्रस्थानं पंचमम् । मेपूरणं दशमम् । दशमे पुरुषस्य प्रवृत्तिं विद्यात् । केन्द्रेष्वन्योन्यं चिन्त्यानि । तथा शास्त्रान्तरे-

"हृदयं ग्रहं च हिबुके मध्याह्ने स्थानमानकोशज्ञाः ।
आत्मार्थजीवितान्यखिलश्रेयश्च नष्टजातकाय ॥
प्रवासपरिदेवनानि जामित्रे मृतरोगतापचिन्ता ।"

तथा प्रवासश्च विज्ञेयाः । चंक्रमणासनरुंधनास्थितिरित्युदयास्ताहिबुकमध्यलग्नेषु ।

"च्युतिर्विलग्नाद्धिबुकाच्च वृद्धिर्मध्यात्प्रवासोऽस्तमयान्निवृत्तिः ।"
हिबुकेनाधः सलिलं नद्या गमनं च सप्तमेनैव ।
दशमेन वृष्टिपतनं ब्रूयादुदयेन तन्नितयम् ॥" इत्यादि ।
प्रश्नजातकेषु विषयविभागं विमृश्य निरूपणीयम् ॥ १८ ॥

( शार्दूलविक्रीडितम् )

होरा स्वामिगुरुज्ञवीक्षितयुता नान्यैस्तु वीर्योत्कटा
केंद्रस्था द्विपदादयोऽह्नि निशि च प्राप्ते च संध्याद्वये ।
पूर्वार्द्धे विषयादयः कृतगुणा मानं प्रतीपं च त-
द्दुश्चिक्यं सहजं तपश्च नवमं त्र्याद्यं त्रिकोणं च तत् ॥ १९ ॥

होरालग्नबलमाह-स्वामिगुरुज्ञवीक्षितयुता होरा वीर्योत्कटा भवति । स्वामिना, गुरुणा, बुधेन वीक्षिता युता होरा वीर्योत्कटेति शेषः । अतएव पणफरस्था मध्यबलाः । आपोक्लिमस्था हीनबला इति च द्रष्टव्यम् । तथा च बादरायणः-

केन्द्रस्थाः स्युरतिबलाः पणफराश्रिता मध्यबला ज्ञेयाः ।
आपोक्लिमगताः सर्वे हीनबला राशयः कथिताः ॥" इति ।

द्विपदादय अह्नि निशि च सन्ध्याद्वये च प्राप्ते वीर्योत्कटा भवन्ति । द्विपाद्राशयः अह्नि । चतुष्पाद्राशयो रात्रौ । कीटराशयः पूर्वसन्ध्यायामपरसन्ध्यायां च वीर्योत्कटा भवन्तीत्यर्थः । पूर्वार्द्धे मेषादिके विषयादयः पंचषट्सप्ताष्टनवदश च संख्याः कृतगुणाश्चतुर्गुणाः मानं राशिप्रमाणं भवतीति शेषः तत उत्तरार्द्धे तुलादिषट्के प्रतीपं प्रातिलोम्येन दशादयो विषयान्ताः संख्याश्चतुर्गुणा प्रमाणं भवति । ह्रस्वदीर्घादिपरिज्ञानेनास्य प्रमाणस्योपयोगः । सहजं दुश्चिक्यं भवति । नवमं तपश्च भवति इति शेषः । तत्र्याद्यं त्रिकोणं च नवमस्य त्रित्रिकोणसंज्ञाप्यस्तीति यावत् ।

गोविन्दः-होरा स्वामीत्यनेन दृष्टिबलमुदयबलं स्थानबलं कालबलं चोच्यते। होराराशिः स्वामिना गुरुणा ज्ञेन वा वीक्षितो दृष्टो बलयुतो भवत्युत उदयबलयुतो भवति। तद्बलानयनमत्र मयोच्यते-'होराफलं लग्नपतेः समानम्' इत्यध्याये वक्ष्यति। ततो बलवशात्फलनियम इति न्यायाद्राश्यधिपतेर्बलं गणितेनानीय तद्राशिं प्रति शुभदृष्टिरस्ति चेत्तद्दृष्टिचतुर्थांशपष्ठ्यंशरूपेण षष्ठ्यंशरूपे स्वामिबले योजयेत्। पापदृष्टिचतुर्थांशं वर्जयेत्। स्वस्वामिगुरुबुधदृष्टिरस्ति चेत्त दृष्टिं च योजयेत्। बुधगुरुभ्यां योगे पूर्णमेकं बलं स्वामिबले योजयेत्। मन्दभौमरविभिर्युक्तस्य पूर्णमेकं बलं शोधयेत्। एकैकस्य त्रिभिर्युगपद्युक्तस्य पूर्णं बलत्रयमुपनयेत्। पूर्णशब्देन षष्ठ्यंशानां षष्टिरुच्यते। चन्द्रशुक्रयोगे बलहानिवृद्धी नो भवतः। नान्यैश्चेत्यत्रान्यशब्देन पापग्रहा गृह्यन्ते। अत्र पराशरमुनिराह-

"शुभदृष्टिचतुर्थांशयुतश्च ज्ञेज्यदृग्युतः।
हीनः पापदृगब्ध्यंशयुतं स्वामिबलं बलम्॥
गुरुज्ञाभ्यान्तु युक्तस्य पूर्णमेकन्तु योजयेत्।
मन्दाररवियुक्तस्य बलमेकेन वर्जितम्॥" इति।

केन्द्रस्था द्विपदादय इत्यत्र लग्नदशमसप्तमचतुर्थभावेषु नरचतुष्पात्कीटाम्बुचरराशयो बलवन्त इति सूचितम्। तत्पूर्वमेव तेषु यथाविहितेषु बलाढ्या इत्यनेनोक्तं तदिदानीं पुनर्वचनमिति चेन्न, इदं प्रश्ने ज्ञेयम्। नात्र त्रैराशिकन्यायः, पूर्वोक्तं जातकविषयम्। पुनःकेन्द्रस्था इत्यत्र केन्द्रस्था इति अभिप्रायोऽस्ति केन्द्रगताः सर्वे राशयो बलवन्तः। पणफरस्था मध्यबलाः। आपोक्लिमस्था हीनबला इत्यर्थः। केन्द्रगतानां राशीनां षष्ठ्यंशानां षष्टिं योजयेत्। पणफरगतानां त्रिंशदापोक्लिमस्थानां पञ्चदशैवमानीतं राशिबलं स्वामिनो बलादेकाकारं चेद्राशिः पूर्णबलः। तथा च पराशरमुनिः-'राशीनां स्वामिनो बलादधिकं पूर्णमेकं तद्बलं चेद्बलिनो मताः' इति। गतयवनेश्वरश्चाह-

"बलानि सप्त चेद्राशाः पूर्णवीर्याः प्रकीर्तिताः।"

अत्र गोऽजाश्वीत्यादिराशीनां दिननिशासंज्ञाविधाने 'शीर्षोदया दिनबलाश्च भवन्ति शेषाः' इत्यत्र बलं गृहाण तत्र दिनराशयो दिने बलिनः। निशाराशयो निशायां बलिनः इति कथयन्ति। अत्र राशिबलानयने बुधजीवरहितशुभदृष्टं चतुर्थांशयोजनं न वराहमिहिराचार्यस्याभिमतम्। 'होरा स्वामिगुरुज्ञवीक्षितयुता नान्यैश्च' इत्युक्तत्वात्। 'द्विपदादयोऽह्नि निशि च प्राप्ते च सन्ध्योदये' इत्यत्र द्विपदचतुष्पदादीनि निशायामुदयराश्यस्तमे राशयो बलवन्त इत्युक्तमत्र कीटशब्देन वृश्चिककुलीरमीनमकरान्त्यार्द्ध इत्यादिबलमुक्त्वा राशीनां मानं कथयन्ति पूर्वार्द्धं

इत्यादीनां पूर्वार्द्धशब्देन मेषवृषमिथुनमीनकुम्भमकराश्चोच्यन्ते । कृतगुणा विषयादयो मानम् । द्वादशराश्यात्मकस्य चक्रस्यैकपरिभ्रमणकालः खल्वहोरात्रस्ततः एकैकराशेः पंचपंच नाडिका उदेतुं कालः कल्पनीयः । तथा न जायते राशिचक्रस्य तिर्यग्भ्रमणवशात् पंचनाडिकाभ्य ऊनो वा राश्युदयकालः । विषयादयः पंचदश इत्येताः कृतगुणाः कृतजीवा येषां कालज्यामानयेदित्यर्थः । षष्टिगुणिताः पंचगुणिता नाडिकास्त्रिशती सा षड्गुणिता सहस्राहिका शतसंख्या प्रमाणमानोदय इत्यक्षरसंख्यया संपरोत्तरेण हत्वा स्वस्वाहोरात्रेण विभज्यावाप्तफलं चापत्रयं विन्यस्य द्वितीयं तृतीयं शोधयित्वा शिष्टद्वयं प्रथमचापं च मिथुनवृषात्र विन्यस्य द्वितीयं तृतीयं शोधयित्वा शिष्टमिथुनवृषमेषाणां मीनकुंभमकराणां च लङ्कोदयप्रमाणाः । मेषवृषमिथुनानां प्रतीपवृत्त्या कर्कसिंहकन्यकानामुदयप्रमाणा भवन्ति । मीनकुंभमकराणां प्रतीपवृत्त्या धनुर्वृश्चिकतुलानामुदयप्रमाणा भवन्ति । तत्र भास्करेणोक्तम्-

"शशिकृतनभरामैराहता राशिजीवाः स्वकदिवसप्रहार्द्धे भाजिताः कांक्षिताश्च । भवंति समतिरिक्ताः पूर्वपापैरजाद्यैर्विषुवदुदयराशिमाणपिण्डाः क्रियाद्यात् ॥"

लंकोदयमाणाःभूमेर्गोलाकृतित्वात्स्वदेशोदयत्व सम्पादनाय स्वदेशचराः संस्कृताः स्वदेशराश्युदया भवन्ति । ततोऽप्युक्तं भास्करेण-

"शून्यादिरसरूपाग्नि भूतरन्ध्रमुनीन्दवः ।
पंचाग्निरन्ध्रशशिनो मेषादीनां निरक्षजाः ॥
चरप्राणाः क्रमाच्छोध्या दीयन्तेऽप्युत्क्रमेण ते ।
स्वदेशभोदयाप्तये व्यत्ययं च तुलादितः ॥" इति ।

एतत्सर्वं गोलसिद्धत्वान्नोक्तम् । दुश्चिक्यं सहजं भवति । तपः नवमः त्रित्रिकोणं च अन्यदर्थांतरं सूच्यते । तृतीयराशिप्रमाणं नवमराशेः लङ्कोदयप्रमाणमिति । अन्यच्च व्यज्यते नवमस्थानं विशेषमिति चिन्त्यते इत्युक्तं च-'सर्वमपहाय चिन्त्यं भाग्यर्क्षं तु विशेषेण इति ॥ १९ ॥

( मन्दाक्रांता )

रक्तः श्वेतः शुकतनुनिभः पाटलो धूम्रपाण्डु-
श्चित्रः कृष्णः कनकसदृशः पिंगलः कर्बुरश्च ।
बभ्रुः स्वच्छः प्रथमभवनाद्येषु वर्णाप्लवत्वम्
स्वाम्याशाख्यं दिनकरयुतान्द्राद्वितीयं च वेशि ॥ २० ॥

इति श्रीमदावन्तिकाचार्यद्विजवराहमिहिरकृते बृहज्जातके
राशिभेदाध्यायःप्रथमः ॥ १ ॥

राशीनां वर्णानाह–मेषो रक्तः। वृषः श्वेतः। मिथुनः शुकतनुनिभः हरित इत्यर्थः। प्रथमभवनाद्येषु मेषादिराशिषु वर्णाः रक्तादयः इति सम्बन्धः। प्लवत्वं दिक्प्रवहत्वम्। स्वेशाशाख्यं राशीश्वरदिगाख्यं गृहदिशः प्रागाद्या इति वक्ष्यन्ते। ततो मेषराशिर्दक्षिणप्लव इत्यादि। दिनकरयुताद्राशेर्द्वितीयं वेशिसंज्ञं च भवति। एवं राशीनां निसर्गभवा, ग्रहभवा, समयभवाश्च विशेषतयोक्ताः।

गोविन्दः राशिवर्णानाह–रक्तः श्वेत इति। मेषाद्येषु राशिषु वर्णा भवन्ति ग्रहरहिते राशीनां वर्णसिद्धिः फलवत्त्वं स्वेशाशाख्यं स्वाधिपतिदिक्प्लवो राशिरिति। स्वजन्मलग्नराशिः, प्रश्नलग्नराशिर्वा यद्दिक्प्लवो भवति तां दिशं गतो राजा चिरेण रिपुं जयति। तथा च सारावल्याम्–'भावाधिपतिदिशीह प्लव' इति। यवनैः "प्रयत्नतस्तत्प्लवगा निहन्याच्चिरेण महीपतिः शत्रुम्" इति। दिनकरयुताद्राशेर्द्वितीयं वेशि। द्वादशं वा वेशीति चकारेण सूच्यते। पूर्ववर्णप्रयोजनं तु "जन्मोदयगृहे वर्णास्तदधिपतेः पूजितो गृहे प्रतिमा। हन्ति हरेरिह शत्रूनिन्द्रधनुर्ध्वजिनीपतिदेवरिपूनिति ॥ २० ॥

इति होराशास्त्रे बृहज्जातकस्य दशाध्यायिटीकायाः प्रथमोऽध्यायः ॥ १ ॥

---

## अथ ग्रहयोनिभेदाध्यायः।

(शार्दूलविक्रीडितम्)

कालात्मा दिनकृन्मनस्तुहिनगुः सत्त्वं कुजो ज्ञो वचो
जीवो ज्ञानसुखे सितश्च मदनो दुःखं दिनेशात्मजः।
राजानौ रविशीतगू क्षितिसुतो नेता कुमारो बुधः
सूरिर्दानवपूजितश्च सचिवौ प्रेष्यः सहस्रांशुजः ॥ १ ॥

पूर्वोक्तस्य मेषादिराश्यवयवनिष्पन्नस्य होरापुरुषस्य सूर्यादिग्रहैः सम्बन्ध उच्यते–कालपुरुषस्यात्मा दिनकृत्। तस्य मनश्चन्द्रः सम्पदामपि कारकः। सत्त्वं कुजः। बुधो वचः। जीवो ज्ञानसुखे। मदनः शुक्रः। दुःखं दिनेशात्मजः। इत्यात्मादिभूतेषु ग्रहेषु बलवत्सु जातस्य पुरुषस्यात्मादयो बलिनो भवन्ति। दुर्बलेषु दुर्बला भवन्ति। आत्मभूतस्य दिनकृतो बलवत्त्वे तस्यात्मप्रभावो जायते आत्मप्रभावादेव हि सर्वकार्यपौरुषसिद्धिस्तस्मादादित्यबलमपि विशेषतश्चिन्त्यम्। मनोभूतस्य चन्द्रस्य बलवतो मनःप्रभावो जायते। मनःप्रभावादेव हि सर्वकार्यसिद्धिस्तस्माच्चन्द्रबलमपि विशेषाच्चिन्त्यम्। आत्ममनसोरितरेतराश्रयत्वात्सूर्याचन्द्रमसोरेकस्य बलवशादितरस्य बलसिद्धिः तथा च संहितायाम्–

"आत्मा सहेति मनसा मन इन्द्रियेण
स्वार्थेन चेन्द्रियगणक्रम एवमेषः ।
योगो यथैव मनसः किमगम्यमस्ति
यस्मिन्मनो व्रजति तत्र गतो यदात्मा ॥" इति ।

आत्मवियोगे मनसो जाड्यं प्रसज्जते तस्मादर्कैन्द्वोर्बलं सर्वत्र चिन्त्यम् । तथा चोक्तम्-

"सविता दशाफलानां वाचयिता चन्द्रमा प्रबोधयिता ।
सर्वेतरग्रहाणां ज्ञेया० ॥" इति ।

कोर्भूमेर्जातः कुजः कुजशब्देन स्थिरत्वं सूचितम् । ज्ञशब्देन ज्ञानरूपत्वं बुधस्य सूचितम् । जीवशब्देन गुरोर्जीवाधिपत्यं सूचितम् । ज्ञानसुखे च जीवः, ज्ञानशब्देन बुद्धिरप्युच्यते । बुद्ध्या खलु सर्वं जानाति पुरुषः । सुखशब्देन धनमपि गृह्यते धनस्य सुखपरमसाधनत्वात्सुखशब्देन पुनरपरमप्युच्यते । तथा चोक्तमन्यत्र-

"पुत्रजन्मविपत्तिभ्यां न परं सुखदुःखयोः ।" इति ।

तस्माद्देहारोग्यवित्तपुत्रबुद्ध्यादिस्वरूपो जीवः । तथा चोक्तम्-

"गुरुणा देहपुष्टिः स्याद्बुद्धिपुत्रार्थसम्पदः ।" इति ।

सितश्च मदनस्तत्र चशब्देन सितस्य विज्ञानसुखस्वरूपत्वं सूचितमयं तु विशेषः सङ्गीतसाहित्यादिज्ञानं शुक्रस्य । वेदादिज्ञानं जीवस्य । सुखमपि तद्वत्, सात्त्विकसुखं जीवस्य राजससुखं सितस्य । गुरुसितयोः सत्त्वरजोमयत्वान्मदनशब्देन सुरभिद्रव्यवृद्धान्नवराम्बरभार्याविवाहकर्मभोगस्थानवाहनशीतकल्यादयो गृह्यन्ते । दुःखं दिनेशात्मज इति अत्र दुःखशब्देन शयाशौचदीक्षाबन्धुनाशव्याधिमरणविपदउच्यन्ते । तथा चोक्तम्-

"संवादो गुरुसंयोगे शशियोगे विपद्द्वयम् ।
चिन्तितव्याः सदा पुंसां सर्वे भावानुसारतः ॥" इति ।

अत्र दिनकृदादयो वारक्रमेण कथितास्तेन किंचित्प्रयोजनं विद्यते दिनयामाधिपत्यविज्ञानम् । तथा चोक्तम्-

"ग्रहा वारनाथादयो वासरस्य प्रमाणाष्टभागाधिनाथाः क्रमेण ।
सुयामाधिपत्यं च तत्पंचमाद्या य आद्यंशनाथः स एवाष्टमस्य ॥" इति ।

दिनेशात्मज इति । दिनेशशब्देनार्यांशस्य योऽधिपत्यमुक्तं दुःखस्वरूपस्य शनेर्यामात्मना विद्यमानस्य गुलिकस्यापि दुःखमयत्वं सूचितम् । कालात्मा दिनकृदित्यादिना जातस्य जन्तोः शरीरावस्था सूचिता।प्रथममात्मानुप्रवेशस्ततो मनसः प्रादुर्भावस्ततः सत्त्वमयादेवृद्ध्यवृद्धयस्ततो मदनविकारादिषयसंगतिस्ततो वार्द्धका-

वस्थायां क्षीणो भूत्वा दुःखितो भवतीत्यादि। अत्र रविचन्द्रयोर्वियोगयोगवशात्तिथयो नित्ययोगाश्चोत्पद्यन्ते।

नक्षत्राणि तु चन्द्रस्य नक्षत्रप्रवेशात्तस्माद्रविचन्द्रवशाद्धि नक्षत्रतिथिकरणसंभवस्तस्मात्कालस्यात्ममनोमयत्वमनयोरुक्तम्।

कालात्मा दिनकृदिति। कालस्वरूपो हि रविरित्युक्तस्तथा हि रविगतिवशादपममण्डलकल्पना दिवसकल्पना चापममण्डलस्थद्वादशराश्युदयवशादहोरात्रसिद्धिः त्रिंशदहोरात्रैर्मासः। मासद्वयेनर्तुः। षड्भिः ऋतुभिः संवत्सरः। इत्यादि कालविभागकल्पनया हि लवादिप्रलयान्तः कालो निष्पद्यते। तस्मात्कालात्मा दिनकृद्भवति। मनस्तुहिनगुरिति—पुरुषस्य मनःप्राधान्येन हि सर्वमनुनिर्दश्यते चन्द्रबलक्षये अन्यग्रहबलेन किंचित्प्रयोजनं विद्यते। तथा चोक्तम्—

"अमृतकिरणवीर्याद्वीर्यमाश्रित्य सर्वे
विदधति फलमेते खेचराः साध्वसाधु।
निजनिजविषयेषु व्याप्रियन्ते यथामू-
न्यलमिह मनसैवाधिष्ठितानीन्द्रियाणि॥" इति।

तस्माच्चंद्रार्कयोर्बलं विशेषतश्चिन्त्यमित्युक्तं भवति। तथा चोक्तम्—

"चन्द्रार्कौ बलयुक्तौ कुजादयः प्रोक्तमार्गबलहीनाः।
हीनाः शुभबलमास्ते सर्वे दशासु योगेषु संचिन्त्याः॥" इति।

राजानौ रविशीतगिवति। रविचन्द्रौ राजानौ। क्षितिजः सेनापतिः। कुमारो युवराजा बुधः। गुरुशुक्रौ सचिवौ। प्रेष्यः शनिः। तथा च सारावल्याम्—

"राजा रविः शशधरश्च बुधः कुमारः
सेनापतिः क्षितिसुतः सचिवौ सितेज्यौ।
प्रेष्यस्तयोश्च रविजः सबला नराणां
कुर्वन्ति जन्मसमये निजमेव रूपम्॥" इति।

जन्मकाले यो ग्रहो बलवाञ्जातस्तत्समानरूपो भवतीत्यन्यदर्थान्तरमस्तीत्येव सूचितम्। द्वादशराश्यात्मकस्य कालचक्रस्य राजानौ रविशीतगू अधिपती इत्यर्थः। दिनपतिर्निशापतिश्च द्वादशराशीनामधिपौ। तत्र रविः स्वस्थानात्सिंहादारभ्य क्रमात् षड्राश्यधिपतिः ततश्चन्द्रः स्वस्थानात्कुलीरादारभ्य उत्क्रमेण षड्राश्यधिपतिः। रविचन्द्राभ्यां दत्तमेव कुजादीनां राश्याधिपत्यम्। तद्यथा—कुमारभूतस्य बुधस्य रविणा स्वस्थानाद्धनस्थानं दत्तम्। सचिवभूतस्य शुक्रस्य पराक्रमस्थानं दत्तम्। सेनापतिभूतस्य कुजस्य वाहनस्थानं दत्तम्। गुरोर्बुद्धिस्थानं पंचमं दत्तम्। प्रेष्यस्य शनेः प्रेष्यस्थानं षष्ठं दत्तम्। एवं चन्द्रेण व्युत्क्रमगणनया धनादीनि स्थानानि दत्तानीति। तथा च सारावल्याम्—

"द्वादशमण्डलभगणस्तस्यार्द्धं सिंहतो रविर्नाथः ।
कर्कटकात्प्रतिलोमाच्छशभृदथान्येऽपि तत्स्थानात् ॥ "
भानोरर्थे विहगाः शूरास्तेजस्विनश्च साहसिकाः ।
शशिनो मृदुश्च सौम्याः सौभाग्ययुताः प्रजायन्ते ॥ " इति ॥ १ ॥

( शालिनी )

हेलिः सूर्यश्चंद्रमाः शीतरश्मि-
र्हेम्नोविद् ज्ञो बोधनश्चेन्दुपुत्रः ।
आरो वक्रः क्रूरदृक्चावनेयः
कोणो मंदःसूर्यपुत्रोऽसितश्च ॥२॥

( वसन्ततिलका )

जीवोङ्गिराः सुरगुरुर्वचसांपतीज्यो
शुक्रोभृगुर्भृगुसुतः सित आस्फुजिच्च ।
राहुस्तमोगुरसुरश्च शिखी च केतुः
पर्यायमन्यमुपलभ्य वदेच्च लोकात् ॥ ३ ॥

सूर्यचन्द्रयोर्द्वे द्वे संज्ञे प्रोक्ते, अन्याः संज्ञा लोकतो वेद्याः । लोकप्रसिद्धत्वात्प्रथममुक्तौ प्रकाशकग्रहौ, पुनरुक्ताः पञ्चताराग्रहाः तदनन्तरमुक्तौ द्वौ यौ तमोग्रहौ । प्रथमोदितौ सूर्येन्दू सर्वसाधारणौ सर्वनिरूपणीयौ ॥ बुधोप्याश्रयवशात्सुखदुःखदो ज्ञेयस्तदनन्तरोदितौ कुजशनी ह्यनिष्टदौ सर्वत्र । तदनन्तरोदितौ राहुकेतू क्षेत्रोच्चादिहीनत्वादशुभफलदाविति । 'पर्यायमन्यदुपलभ्य वदेच्च लोकात्' इति विधिर्न केवलमस्मिन् शास्त्रे यः पर्यायोऽत्र नोक्तः स लोकाच्छास्त्रेषु दर्शनाज्ज्ञात्वा वदेत् । अत्रानुक्तानि यानि लक्षणानि तानि न निरूपणीयानि इति नावगन्तव्यम् । तानि ज्ञात्वा सर्वं वदेदित्युक्तम् । बुधजीवशुक्राणां चत्वारिचत्वारि नामान्युक्तानि । मन्दारयोस्त्रीणि त्रीणि । राहोस्त्रयः तमः अगुः असुरश्चेति । केतोश्चैकं शिखीति ॥२॥

( शालिनी )

रक्तः श्यामो भास्करो गौर इन्दु-
र्नात्युच्चाङ्गो रक्तगौरश्च वक्रः ।
दूर्वाश्यामो ज्ञो गुरुर्गौरगात्रः
श्यामः शुक्रो भास्करिः कृष्णदेहः ॥ ४ ॥

ग्रहाणां वर्णा उक्ताः। किमस्य प्रयोजनमिति चेद्यस्मिन् ग्रहे बलवति जातस्तदानीं तत्तुल्यो वर्णो भवति। तथा च कृष्णीये–

"आत्माकृतिवर्णादि ग्रहस्तु न जहाति परगृहस्थोऽपि।
तत्स्वाम्याकृतिवर्णो जातस्येत्यपरे व्यवस्यन्ति॥" इति।

'चन्द्रसमेतनवांशपवर्णः' इत्यत्रायं गृह्यत्वे–उच्चगो रक्तः, नीचगः श्यामः रविर्भवति। नात्युच्चाङ्गः ऽत्यन्त इत्यर्थः। गौरगात्रः धवलगात्रः गौरावयवः इत्युक्तम्। भास्करैः कृष्णदेहः अन्तः स्वच्छ इत्यर्थः॥ इति॥ ४॥

(शार्दूलविक्रीडितम्)

वर्णास्ताम्रसितातिरक्तहरितव्यापीतचित्रासिता
वह्न्यम्ब्वग्निजकेशवेन्द्रशचिकाः सूर्यादिनाथाः क्रमात्।
प्रागाद्या रविशुक्रलोहिततमः सौरेंदुवित्सूरयः
क्षीणेंद्वर्कमहीसुतार्कतनयाः पापा बुधस्तैर्युतः॥ ५॥

एवं ग्रहाणां निजशरीरवर्णानुक्त्वा तदधिदैवतान्वर्णानाह–ताम्रादयो वर्णाः सूर्यादिनाथाः सूर्यादयो नाथा येषां ते तथोक्ताः अनेन ग्रहपूजादौ तद्वर्णकुसुमवस्त्रपरवादयः शक्यन्ते। पदार्थानामसंख्यत्वात्पदार्थस्य प्रथमं साक्षात्कथनं दुष्करं स्यात्। वह्न्यम्बित्यादि–वह्न्यम्ब्वग्निजकेशवेन्द्रशचिकाः सूर्यादिनाथा भवन्ति। सूर्यादिनाथा इत्यत्र षष्ठीतत्पुरुषसमासः। अत्र वह्निशब्देनाग्निश्च रुद्रश्च विवक्षितौ, कृशानुरेता हि भगवान्हरः। अम्बुशब्देनापरः सूचितः। शब्दैकदेशकथनादंबिका गौरी च। अग्निजशब्देन स्कन्द उच्यते। कुण्डाश्रयत्वादग्नेरधिष्ठानभूता भूमिश्च। केशवशब्देन विष्णुरेव विवक्षितः। इन्द्रशब्देन शक्रः ब्रह्मा वा देवानामाश्रयभूतत्वात्।–शचीशब्देनेन्द्राणी इन्द्रो वा। कशब्देन ब्रह्मा गृह्यते। शब्दैकदेशेन कालो वेत्युक्तार्थानुसारेण–शास्त्रान्तरे पक्षद्वयत्वेनोक्तम्। तथा च शास्त्रान्तरे–

"सूर्यादितः शिवशिवागुहकेशवेन्द्रकालाः क्रमेण पतयः कथिताः सुधीभिः।
वह्न्यम्बुभूमिहरिशक्रशचीसुरेन्द्रास्तेषां पुनर्मुनिवरैः प्रतिदेवताश्च॥"

द्वितीयपक्षानुसारेण पतयोऽत्र सुगमाः। तथा च सारावल्याम्–

"पावकजलगुहकेशवशक्रशचीविधयः पतयः।
पूर्वादिग्रहदैवतमत्र सम्पूज्य देवतामाशाम्॥
कनकगजवाहनादीन् प्राप्नोति भूपतिः शीघ्रम्॥" इति।

प्रागाद्या इति। प्रागादिदिङ्नाथाः सूर्यादयो भवन्ति। एते जातकविषयाः। अथ पक्षान्तरम्। रवेः प्राची। शुक्रस्य प्रतीची। लोहितस्याग्नेयी। तमसः ऐशानी।

सौरेर्वायवी । इन्द्रोश्चन्द्रस्योदीची । बुधस्य नैर्ऋती । सुररवाचीति अयमुपदेशगम्यः । केशरीभोगशेषो ह्ययं पक्षो नष्टमुष्टयादिषु ग्राह्यः । तथा च कृष्णीये-

"रविकुजसुरगुरुशशिसुतभृगुसुतसौरेन्दुसैंहिकेयानाम् ।
प्रादक्षिण्येन दिशः प्राच्याद्याः फलिपताश्चान्यैः ॥" इति ।

एवं द्विविधग्रहदिक्कथने यां दिशं प्रति ग्रहो गच्छति सा तस्य दिगित्युपदेशः । क्षीणेन्द्वित्यादि । क्षीणेन्द्वादीनामुत्तरोत्तरं पापफलसूचकत्वमवगन्तव्यम् । अनेन प्रयोजनं तु शुभग्रहैः पापग्रहैश्च बलयुतैःफलभेद उच्यते । रविकुजसौराः निसर्गतः पापाः। चन्द्रबुधयोरवस्थान्तरेणैव पापत्वम् । गुरुशुक्रयोः सर्वदा शुभफलदत्वमवगन्तव्यम् । अत्र चन्द्रस्य क्षीणत्वे पापत्वं स्वतो जायते। चन्द्रस्य क्षीणत्वेऽन्ये ग्रहाः स्थानबलादिबलवन्तोपि विबला भवन्ति । तत्स्मात्सर्वे ग्रहाः शुभानि न दद्युः । तेन हि क्षीणचन्द्रस्य पापत्वं क्षीणचन्द्रादप्यर्कस्य पापत्वं, तस्मादपि कुजस्य, तस्मादपि शनेः, रविकुजौ तु वह्निभूतस्य स्वरूपौ, क्षत्रकुलाधिपौ च, तथापि रवेः सत्त्वगुणमयत्वादत्यन्तं पापत्वं न विद्यते कुजस्य तमोमयत्वादर्कादिभिः पापत्वमुच्यते । शनेस्तु तमोमयत्वाद्वायुमयत्वाद्दुःखमयत्वाच्च कुजादपि पापत्वं जायते । यवनपक्षे तु रवेः क्रूरत्वं कुजशन्योः पापत्वमिति विशेष उक्तस्तथा च तद्वाक्यम्-

"क्रूरग्रहोऽर्कः कुजसूर्यजौ तु पापौ शुभाः शुक्रशशाङ्कजीवाः ॥" इति ।

अस्य प्रयोजनं तु-शुभग्रहैः पापग्रहैश्च बलयुतैःफलभेद उच्यते तथा च सारावल्याम्-

"आचारसत्त्वशुभशौर्ययुताः स्वरूपा-
स्तेजस्विनः कृतविदा द्विजदेवभक्ताः ।
स्रग्वस्त्रगन्धजलभूषणसत्प्रियाश्च
सौम्यग्रहैर्बलयुतैः पुरुषा भवन्ति ॥
लुब्धाः कुकर्मनिरता निजकार्यनष्टाः
साधुद्विषः सरलहासमनोभिभूताः ।
क्रूराः सदा वधरता मलिनाः कृतघ्नाः
पापग्रहैर्बलयुतैः पिशुनाः कुरूपाः ॥" इति ।

क्षीणेन्दोरधमकथनं तस्य शुभसूचकम् " अमायां च चतुर्दश्यां क्षीणचन्द्रो न सर्वदा ॥ ५ ॥

(औपच्छन्दसिकम्)

बुधसूर्यसुतौ नपुंसकाख्यौ
शशिशुक्रौ युवती नराश्च शेषाः ।

शिखिभूखपयोमरुद्गणाना-
धिपा भूमिसुतादयः क्रमेण ॥ ६॥

ग्रहाणां नपुंसकस्त्रीपुरुषत्वमुच्यते। बुधसूर्यसुतौ नपुंसकौ। शशिशुक्रौ युवती। नरास्तु शेषाः। अत्र तु अर्थविशेषो ध्वन्यते। शेषाः रविकुजगुरवः पुरुषास्तेषां क्रममध्येऽर्कः पिता, कुजो भ्राता, गुरुः सुतः। शशिशुक्रौ युवती-शशी माता, शुक्रो भार्या। अत्र स्त्रीग्रहकथनानन्तरं पुंग्रहविधिस्तथापि नपुंसकोपि। स्त्रीपुंविभागे ज्ञेयः बुधस्त्रीनपुंसकं, सूर्यसुतः पुंनपुंसकम्, अर्थाद्बुधशन्योर्नपुंसकत्वविधानाः चेष्टामात्रफलानां तिरश्चामपि सूचकत्वमूह्यम्। अथ स्त्रीपुरुषसंयोगाल्लब्धानां, तथा दत्तपुत्रादीनामपि कारकत्वं तर्कणीयम्। पुंस्त्रीनपुंसकचिन्तायां सर्वत्राऽयं विधिः। शिखीत्यादिना ग्रहाणां भूतसम्बन्ध उच्यते। शिखिभूप्रभृतीनां भूमिसुतादयोऽधिपाः स्वामिनो भवन्ति। गणशब्दः पादपूरणार्थमिति कैश्चिद्व्याख्यातं तदसत्, यतः अथ बहुलं स्वल्पं शास्त्रफलं प्रारभे इत्युक्तवताऽऽचार्येण न केवलं पादपूरणार्थमयं शब्दः प्रयुक्तः इति प्रतिभाति, तस्मादयमर्थोऽत्र गम्यते गणशब्दः प्रत्येकं योजनीयः। शिखिगणास्तावद्वह्निरूपचक्षुरिन्द्रियपादव्यानमनोमयकोशाः। भगणाः पृथिवीगन्धघ्राणेन्द्रियोपस्थप्राणमयकोशाः। खगणाः ह्याकाशशब्दश्रोत्रेन्द्रियवाक्समानानन्दमयकोशाः। पयोगणाः खलु रसनेन्द्रियाद्यपानप्राणमयकोशाः मरुद्गणा वायुस्पर्शत्वगिन्द्रियपाण्युदानविज्ञानमयकोशाः। एवमुपदेशसिद्धोर्थः। मेषादिराशीनामपि स्वामिग्रहोक्तान्येव भूतानीत्यवगन्तव्यम्। राशीनां भूतानुपदेशः। तथा च कृष्णीये-

"क्षित्यम्बुपवनपावकवियन्ति भूतानि पञ्च कथितानि।
बुधभृगुयमभौमानां जीवस्यैषां ग्रहाणां च॥" इति।

कुलीरसिंहयोर्जलाग्नी भूते, 'वह्न्यम्बु' इत्यादिना रविचन्द्रयोः पूर्वमेव कृते, अत्र ग्रहाणां शुष्कार्द्रत्वमप्यनया भूतोक्त्यैव सिद्धमेव। कथमग्निमयत्वादर्ककुजयोर्वायुमयत्वाच्छनेस्तु शुष्कत्वमवगन्तव्यम्। जलमयत्वाच्छशिशुक्रयोरार्द्रत्वमवगन्तव्यम्। गुरुबुधयोराकाशपृथिवीमयत्वादाश्रयतुल्यत्वमवगन्तव्यम्। तथा च कृष्णीये-

"शुष्का रविकुजसौराः सितचन्द्रमसौ जलात्मकौ ज्ञेयौ।
आश्रयगौ गुरुसौम्यौ सबलावित्युक्तमाचार्यैः॥"

अनेन भूतकथनेनैव ग्रहाणां राशीनां च सजलविजलात्मकत्वमवगन्तव्यम्। रविकुजमन्दा अग्निवायुमयत्वादतोयाः। शुक्रचन्द्रावाप्यत्वाज्जलमयौ। बुधगुरुक्षित्याकाशतुल्यत्वादाश्रयतुल्यौ। एवं राशीनां च। तथा च कृष्णीये-

"मीनकर्किमृगान्त्यार्द्धवृषतौल्पालियोषितः ।
कुम्भश्च तोयभानि स्युग्रहेषु शशिभार्गवौ ॥
तोयात्मकौ ज्ञजीवौ तु सतोयौ जलराशिगौ ।
वितोयौ वह्निराशिस्थौ शुष्काः शन्यर्कभूमिजाः ॥ " इति ।

भूमिषु जलप्रश्ने वर्षप्रश्ने चास्य विनियोगः । पुनरप्युपदेशः प्रदर्श्यते । यत्र रविकुजौ दुःस्थौ तत्रामेयाः पैत्तिकाः । यत्र चन्द्रशुक्रौ दुःस्थौ तत्र जलप्रधानरोगाः । यत्र बुधो दुःस्थस्तत्र त्रिदोषप्रधानाः ।
यत्र शनिर्दुःस्थस्तत्र वातप्रधानाः । यत्र गुरुर्दुःस्थस्तत्राकाशप्रधाना बधिरत्वादयो रोगा भवन्ति । एवं भूतवशाद्बहुधा फलं चिन्त्यते । उदयादारभ्य पादोनचतुर्घटिकाकालेन पृथिव्यादिपञ्चभूतानि क्रमोत्क्रमाभ्यामुद्यन्ति । तथा चोक्तम्-

"पादाभ्यधिकमथैकं त्रिपादमर्धं च पादं च ।
भूम्यादीनामुदयघटिकामानं विदुः क्रमोत्क्रमतः ॥"

राशिभूतादयोऽपि हि निरूप्यन्ते । तथा च भगवत्पादाचार्यः-

"पुटयोरुभयोश्च दण्डसंस्था पृथिवी तोयमधः कृशानुरूर्ध्वम् ।
पवनो नसीह वामे मध्ये गगनं भूतगतिस्तनूद्भवेयम् ।" इति ।
"न मृतिर्न रोगशान्तिः पृथ्व्या उदये जलोदये च पुनः ।
ईप्सितमचिरात्सिद्ध्यति वह्नेरुदये मृतिर्विरोधश्च ॥
वायोरुदये सिद्ध्यति सर्वं गमनागमादिबलकार्यम् ।
व्याध्यारम्भो नाशो द्रव्याणामाहवश्चात्र ॥
आकाशोदयकाले सिद्ध्यत्यशुभं विशेषेण ।" इति ।

अलमतिप्रसङ्गेन ॥ ६ ॥

(उपजातिः)

**विप्रादितः शुक्रगुरू कुजार्कौ**
**शशी बुधश्चेत्यसितोऽन्त्यजानाम् ।**
**चन्द्रार्कजीवा ज्ञसितौ कुजार्की**
**यथाक्रमं सत्त्वरजस्तमांसि ॥ ७ ॥**

विप्रादयः शुक्रादयो वर्णाधिपाः शुक्रगुरू विप्राधिपौ कुजार्कौ क्षत्रियाधिपौ । शशी वैश्याधिपः । बुधः शूद्राधिपः । शनिरन्त्यजानामधिपः इति । तथाचोक्तम्-

"विप्राह्वयौ गुरुसितौ नृपती कुजार्कौ ।
वैश्यः शशी शशिसुतो वृषलोऽर्कजोऽन्त्यः ।" इति ।

शशी बुधश्च वैश्याधिपौ, शनिः शूद्राधिप इति केचित्। तथा च कृष्णीये–

"विप्रौ भृगुदेवगुरू क्षत्रियभावौ दिवाकरोर्वीजौ।
वैश्यौ बुधचन्द्रमसौ शनैश्चरः शूद्रसंकरकृत् ॥" इति।

पक्षद्वयानुसारेण शनिर्बुधश्चेत्यसमासनिर्देशः। शुक्रगुरू इत्यत्र शुक्रो मध्यमब्राह्मणः गुरुरुत्तमब्राह्मणः। राशिग्रहसम्बन्धवशाच्छेषं कुजार्कावित्यत्रायं न्यायो द्रष्टव्यः– कुजो माण्डलिकः, रविः सार्वभौमः। सामाद्युपायचतुष्टयाधिपत्यमनेन सूचितम्। शुक्रगुर्वोर्विप्रत्वात्सामाधिपत्यमूह्यम्। कुजार्कयोः क्षत्रियत्वाद्दण्डाधिपत्यमवगन्तव्यम्। शशिनो वैश्याधिपत्यं देयमवगन्तव्यम्। बुधशन्योरन्त्यवर्णाधिपत्यत्वाद्भेदाधिपत्यं वेद्यम्। तथा च संग्रामविजये–

"साम्नो भृग्वङ्गिरसौ दण्डाधीशौ दिवाकरोर्वीजौ।
दानाधिपः शशाङ्को भेदस्य बुधार्कपुत्रौ च ॥" इति।

अथ ग्रहाणां द्विपदचतुष्पदपक्षिसरीसृपत्वमप्यनेन सूचितम्। विप्रशब्देन द्विपात्प्रवरो ब्राह्मणः। द्विपदादित इति यावत्। शुक्रगुरू द्विपदौ। कुजार्कजौ चतुष्पदौ। शशी सरीसृपः। बुधासितौ पक्षिणौ इति। तथा च कृष्णीये–

"सूर्यात्मजेन्दुपुत्रौ पक्षिसमानौ सरीसृपश्चन्द्रः।
द्विपदौ भृगुदेवगुरू चतुष्पदौ भूमिपुत्रार्कौ ॥" इति।

जातिनिर्णयेऽस्य विनियोगः। चन्द्रार्कजीवा इत्यादि ग्रहाणां त्रिगुणात्मकत्वमनेन विधीयते। यस्मिन्ग्रहे बलवति पुरुषो जातस्तद्ग्रहगुणस्वभावो भवति, त्रिविधा हि पुरुषा भवन्ति। सात्त्विका राजसिकास्तामसिकाश्चेति। स्वभावश्च संहितायामुक्तम्। तथा च तद्वाक्यम्–

"यः सात्त्विकस्तस्य भवेत्स्थिरत्वं सत्यार्जवे ब्राह्मणदेवभक्तिः।
रजोधिकाः काव्यकलाकृतिः स्त्रीसंसक्तचित्तः पुरुषोऽतिशूरः ॥
तमोधिको वञ्चयिता परेषां हिंस्रोऽलसः क्रोधपरोऽतिनिद्रः।
मिश्रैर्गुणैर्मिश्रगुणस्वभावा भवन्ति सर्वेऽपि शरीरभाजः ॥" इति।

लग्ने ग्रहदृष्टियोगाभ्यां वा बलवद्ग्रहवशात्त्रिगुणाधिपत्यं चिन्त्यम्। अथवा यस्य त्रिंशांशके रविस्तद्गुणप्रधानः पुरुषो भवति। तथा च स्वल्पजातके–

"सत्त्वं रजस्तम इति त्रिंशांशे यस्य भास्करस्तादृक्।" इति।

देवताविशेषश्चिन्त्यः। तुङ्गग्रहयोगदृष्टिवशादनुकूलस्थाने ग्रहाणां स्थितिवशाद्विशेष ऊह्यः। पुंस्त्रीराशिग्रहवशाद्देवतापुंस्त्रीविभागः कल्प्यः तत्र चन्द्रः सात्त्विकप्रकृतिः, रविः सात्त्विकः शिवः, गुरुः सात्त्विको विष्णुः इत्यादि। जातकेषु ग्रहवशात्त्रिगुणाधिपत्यं विज्ञाय पुरुषस्य शुभाशुभफलं चिन्त्यम् ॥ ७ ॥

मधुपिंगलदृक्चतुरस्रतनुः
ज्वलनप्रकृतिः सविताऽल्पकचः ।
तनुवृत्ततनुर्बहुवातकफः
विबुधश्च शशी मृदुवाक् शुभदृक् ॥ ८ ॥

अथ ग्रहस्वभाव उच्यते । मधुपिंगला दृग् यस्य । चतुरस्रतनुश्चतुष्कोण इत्यर्थः पुनः भावफलाध्याये 'शूरस्तब्ध' इति वक्ष्यति । तदत्र योज्यम् । शूरस्तब्धः प्रधान इत्यर्थः । गम्भीरश्च पित्तप्रकृतिरित्यनेन सारावल्यामुक्तम्–

"अल्पाकुञ्चितमूर्धजः पटुमतिः सत्त्वस्वरूपश्चलो
नात्युच्चो मधुपिङ्गचारुनयनः शूरः प्रचण्डोऽस्थिरः ।
रक्तः श्यामतनुर्निगूढचरणः पित्तास्थिसारो महान्
गम्भीरश्चतुरस्रकः पृथुकरः कौसुंभवासा रविः ॥ " इति ।

व्याधिप्रश्नोपयोगत्वादन्योर्यो ध्वन्यते । मधुपिंगलदृगिति नयनविकलः । अल्पकचो नष्टकचः । ज्वलनप्रकृतिः पित्तप्रकृतिः; पित्तप्रधानदाहोष्णज्वरादिमानित्यर्थः । चतुरस्रकथनेन भोजननष्टादिषु पात्रद्रव्याकृतिज्ञानं प्रयोजनम् । तनुवृत्ततनुरिति–तनुर्लघुः, वृत्तं वर्त्तुलं, विबुधः प्राज्ञः त्रिकालवित् । मृदुवाक् मधुरवचाः । शुभदृक् सुनयनः । तथा च सारावल्याम्–

सौम्यः कान्तविलोचनो मधुरवाग्गौरः कृशांगो युवा
प्रांशुः सूक्ष्मविकुञ्चितासितकचः प्राज्ञो मृदुः सात्त्विकः ।
चारुर्वातकफात्मकः प्रियसखो रक्तैकसारो घृणी
वृत्तः स्त्रीषु रतश्चलोऽतिसुभगश्चित्राम्बरश्चन्द्रमाः ॥ " इति ॥ ८ ॥

( स्वागता )

क्रूरदृक् तरुणमूर्तिरुदारः
पैत्तिकः सुचपलः कृशमध्यः ।
श्लिष्टवाक् सततहास्यरुचिर्ज्ञः
पित्तमारुतकफप्रकृतिश्च ॥ ९ ॥

क्रूरदृग् अशुभदृष्टिः । तरुणमूर्तिर्युवा । उदारो दाता । पैत्तिकः पित्तप्रकृतिः । सुचपलः अस्थिरः । कृशमध्यो दुर्बलकटिः । क्रूरं पश्यतीति क्रूरदृक् । तरुणमूर्तिर्बालाकार इति केचित् । क्रूरदृगिति क्रूरा दृग् यस्येति, कुजस्य दृष्टेरशुभत्वं सूचितम् । अथवा लोचनस्य रक्तत्वात्क्रूरदृक्, तरुणमूर्तिः । सुदृढवपुः, पैत्तिक इत्यंगादिदीप्तिः

सूचिता। उदारशब्देन पटुतरत्वं सूचितम्। चपलः अविमृश्यभाषी अनिष्पन्नवागित्यर्थः। तरुणशब्देन कुञ्चितकेशत्वम्। अथवा क्रूरदृगिति चण्डः विघातकुशलः संरक्षणे भीरुः कुज इति। श्लिष्टवागिति। श्लिष्टावागस्येति प्रियवागित्यर्थः। अथवा श्लिष्टा युक्ति युक्ता वाग्यस्येति। अथवा श्लिष्टा यथास्थानमाप्ताऽक्षरा वाग्यस्येति। सततहास्यरुचिः सततं सर्वदा हास्ये हसने रुचिरस्येति, हसनशील इत्यर्थः। दृष्टात्मा वा अथवा हास्यरसरुचिः शुभा यस्येति। सर्वेषामनुकरणेन हास्यरसजनक इत्यर्थः। पित्तमारुतकफप्रकृतिश्चेति चशब्देन मध्यरूप इत्यपि सूचितम्। एवं बुधस्वरूपम्। तथा च सारावल्याम्—

"रक्तान्तायतलोचनो मधुरवाक् दूर्वादलश्यामल-
स्त्वक्सारोतिरजोधिकः स्फुटवचाः स्फीतस्त्रिदोषात्मकः।
हृष्टो मध्यमरूपवान् सुनिपुणो वृत्तः शिराभिस्ततः
सर्वस्यानुकरोति वेषवचनैः पालाशवासा बुधः॥ ९॥" इति।

(वंशस्थम्)

बृहत्तनुः पिङ्गलमूर्द्धजेक्षणो
बृहस्पतिः श्रेष्ठमतिः कफात्मकः।
भृगुः सुखी कान्तवपुः सुलोचनः
कफानिलात्माऽसितवक्रमूर्द्धजः॥ १०॥

श्रेष्ठमतिरिति धर्मबुद्धिः न श्रोत्रज्ञश्च क्षमावान् वेदशास्त्रज्ञश्च कफात्मक इति श्लेष्मप्रकृतिः दयापरश्च बृहस्पतिः इति स्वरूपम्। तथा च सारावल्याम्—

"ईषत्पिंगललोचनोऽश्रुतिपरः सिंहाब्दनादः स्थिरः।
सत्त्वाढ्यः सुविशुद्धकाञ्चनवपुः पीनोन्नतोरस्थलः॥
ह्रस्वो धर्मपरः सुनीतिनिपुणो बद्धोत्कटाक्षः क्षमी।
व्यापीताम्बरभृत्कफात्मकतनुर्मेधाप्रधानो गुरुः॥" इति।

भृगुः सुखीति शुक्रस्वरूपमुच्यते—शीतेन सुरभिद्रव्यैरन्नपानैश्चाम्बरैः स्त्रीभिश्च मदनोपकरणैरन्यैश्च काव्यादिभिरिष्टजनेन च सुखीत्युक्तम्। कान्तवपुरिति ललितदेहः कान्तिमान् स्त्रीणां मनोहरश्चोक्तः सुलोचनः इति विशालायतनयन उक्तः। कफात्मेति कफप्रधानवातप्रकृतिरुक्तः। असितवक्रमूर्द्धजेति तथा चोक्तम्—

"कृष्णाकुञ्चितसूक्ष्मलंबितकचः"उक्तः। एवं शुक्रस्वरूपम्। तथा च सारावल्याम्—

"चारुर्दीर्घभुजः पृथुरुवदनः शुक्राधिकः कान्तिमान्

कामी वातकफाधिकोऽतिसुभगश्चित्राम्बरो राजसः
लालावान्मतिमान्विशालनयनः स्थूलात्मदेहः सितः ॥१०॥" इति।

( वसंततिलका )

मन्दोऽलसः कपिलदृक्कृशदीर्घगात्रः
स्थूलद्विजः परुषरोमकचोऽनिलात्मा ।
स्नाय्वस्थ्यसृक्त्वगथ शुक्रवसा च मज्जा
मन्दार्कचन्द्रबुधशक्रसुरेज्यभौमाः ॥ ११ ॥

एवंगुणो मन्दः । अलसः मन्दोत्साहः मन्दस्वरूपमुच्यते । अलस इति परिभ्रमेण सह क्रोधपरश्चोक्तः । मन्द इति पिशुनश्चपलः अज्ञः रौद्रश्चोक्तः । कपिलदृक् कपिलनिम्नलोचनः । अथवा कपिलदृगिति कपिला कलुषिता स्थूला नखदन्तादयो यस्य अधोभागे परुषाणि रोमाणि बहूनि सन्तीति ज्ञानार्थमेवं मन्दस्वरूपमुक्तम् । तथा च सारावल्याम्-

"पिंगो निम्नविलोचनः कृशतनुर्दीर्घः सिरालोलसः
कृष्णांगः पवनात्मकोऽतिपिशुनः स्नाय्वात्मको निर्घृणः ॥
मूर्खः स्थूलनखद्विजोऽतिमलिनो रूक्षो शुचिस्तामसो
रौद्रः क्रोधपरो जरापरिणतः कृष्णाम्बरो भास्करिः ॥" इति।

अत्राल्पाकुञ्चितमूर्द्धजः इत्यादिश्लोकाः इह स्वरूपप्रदर्शकाः । सारावलीगता ये मया लिखितास्तेपूक्तानि ग्रहवर्णगणधातुवस्त्राण्याचार्येणाप्युपदिष्टानि । रक्तश्याम इत्यादिना वर्णः । चन्द्रार्कजीवा इत्यादिना गुणाः स्नाय्वस्थीत्यादिना धातवः । वर्णास्ताम्रेत्यादिना वस्त्रवर्णविशेषाश्च कथिताः । अनेन ग्रहस्वरूपकथनेन प्रयोजनम् । प्रश्नजातकादौ देहस्वभावकथनम् । तथा च कृष्णीये-

"अथवं ग्रहा बलस्थाश्चिन्ताकाले नृणां स्वमूर्तिसमाः ।
कुर्युर्देहान्नियतं बहवश्च समागता मिश्रम् ॥" इति।

स्नाय्वस्थीति ग्रहाणां धातवः । बलवद्ग्रहधातुसारो जातः । रोगप्रश्ने तु दुष्टग्रहधातुगतो रोगो भवति।अथवा रोगप्रदग्रहनवांशकाधिपतिधातुरोगो भवति ॥११॥

( शार्दूलविक्रीडितम् )

देवाम्ब्वग्निविहारकोशशयनक्षित्युत्करेशाः क्रमाद्
वस्त्रं स्थूलमभुक्तमग्निकहतं मध्यं दृढं स्फाटितम्।

ताम्रं स्यान्मणिहेमयुक्तिरजतान्यर्काच्च मुक्तायसी
द्रेष्काणैः शिशिरादयः शशुरुचज्ञवादिपूचरसु वा ॥ १२ ॥

अर्कादारभ्य ग्रहाणां स्थानानि। देवशब्देन देवगृहं राजगृहं च सूच्यते। क्षितुत्कर: पांसूत्कर उपस्करो वोक्तः। यत्र सर्वादीनां नष्टादीनां स्थानजिज्ञासा तत्र गृहवशात्स्थानकथनेयं विधिः। देवाम्वादेः समीपं वासगृहं वा स्वरूपं वा योगमूलम्। वस्त्रे स्थूलमित्यादि स्थूलं परुपमभुक्तमननुभूतम्। नवमाच्छिन्नमग्निहतं दग्धं छिन्नं वाऽरक्षितत्वात् कहतं मलिनं छिन्नं वा। तथा च कृष्णीये-

"मलिनच्छिन्नदृढादृढदग्धस्थूलाम्बुवातु जीर्णानि।
सौम्येन्दुगुरुभुजङ्गमकुजार्कशिखिभृगुसूर्यजानां स्युः ॥" इति।

स्थूलशब्देन चर्म च सूचितम्। अभुक्तशब्देनाक्षालितदुकूलवस्त्रादयो गृह्यन्ते। अग्निकहतमग्निगतं 'हन हिंसागत्योः' इति गत्यर्थस्य निष्क्रान्तरूपं हतमित्युच्यते। काष्ठादग्निर्जायते। कारणकार्याभेदोपचाराद्वृक्षत्वमित्यर्थः। कहतं जलवन्मृदु प्रवालजलसम्बन्धे हिंसितमिति वा। मध्यं कौशेयं, दृढं प्रसिद्धम्। कार्पासकृतमम्बरम्, स्फाटितं-वल्कलमित्यर्थान्तरं सूचितम्। तथा च कृष्णीये-

"वल्कलमर्ककुजाभ्यां गुरुणा कौशेयमिन्दुजे बालम्।
शशिना च दुकूलपदं रविणा चर्माम्बरं भृगुणा ॥" इति।

ताम्रं स्यादित्यादिताम्रशब्देन पाटलवर्णं पाषाणाद्यं च गृह्यते। अन्यानि द्रव्याणि च रवेस्तावत्सूर्यकान्त आरकूटं वैदूर्यं च गृह्यते। चन्द्रस्य जलस्वरूपत्वान्मुक्ताशङ्खस्फटिककांस्यत्रपूणि। ताम्रेष्टकादि भौमस्य। मुक्तकादि बुधस्य। रजतस्फाटिकमुक्तादि शुक्रस्य। आरक्तमणिकनककाचादि बलवतो बृहस्पतेः। अञ्जनलोहेन्द्रनीलादि शनेरित्यादि। सामान्यचलस्थस्य बृहस्पतेः रजतं शास्त्रान्तरादवगन्तव्यम्। आग्नेयग्रहयोः सूर्यभौमयोर्वर्गे भौमवीक्षितं चेद्धाम्यो धातुः। जलस्वरूपयोश्चन्द्रशुक्रयोर्वर्गे चन्द्रशुक्रावीक्षितौ-चेद्धाम्योधातुरित्यनुक्तमपि पञ्चभूतग्रहयोरभेदत्वादूह्यम्। 'छाया महाभूतकृताश्च सर्वेमित्यञ्जयन्ति स्वदशामवाप्य' इत्युक्तत्वाद्वर्णास्ताम्रेत्यादिधातुना वर्णाश्चिन्त्याः। द्रेष्काणैः शिशिरादय इति शनिशुक्रकुजाधिरचन्द्रज्ञगुरुभिराद्यक्षरोक्तैः रवेः शिशिरादि षडर्तवो ज्ञेयास्तेषां द्रेष्काणे वा तेषामुदयाद्वित्यर्थः ॥ एवमृतुषु ग्रहानुगुणो गणैरप्युन्नेयं शीतं हिमाधिक्यात्तद्दतौ मन्दस्य दुःखकारकत्वेन दुःखकालः। शुक्रस्य मदनस्वरूपत्वात्तद्दतौ मदनोदयः। रुधिरस्याग्नेयत्वात्तद्दतौ तैक्ष्ण्यम्। चन्द्रस्य जलमयत्वात्तद्दतौ वर्षागमः। ज्ञस्य वैमल्यात्तद्दतौ वैमल्यम्। गुरोः ज्ञानस्वरूपत्वात्तद्दतौ बुद्धेः सात्त्विकमित्यादि। यो ग्रहो व्याधिप्रश्ने दुःस्थस्तद्दतौ तद्रोगविस्तरः। इति ॥ १२ ॥

( प्रहर्षिणी )

त्रिदशत्रिकोणचतुरस्रसप्तमा-
न्यवलोकयन्ति चरणाभिवृद्धितः ।
रविजामरेज्यरुधिराः परे च ये
क्रमशो भवन्ति किल वीक्षणेऽधिकाः ॥ १३ ॥

चतुरस्रमध्यमा परे च, ते चरणाभिवृद्धितः अवलोकयन्ति ग्रहा इति सिद्धं भवति। तत्रायं विशेषः। रविजामरेज्यरुधिराः ये परे च तेः वीक्षणेऽधिकाः। त्रिदशत्रिकोणयोश्चतुरस्रयोः सप्तमे च वीक्षणेऽधिकाः फलप्रदाः भवन्ति। समग्रफलदा भवन्तीत्यर्थः। अत्र न केवलं सप्तमे दृष्टे विनियोगः। अन्यस्थानामपि पादार्धपादो-नदृष्टीनामपि जन्मकाले निरूपणीयत्वमश्यमेव। तथा च सारावल्याम्-

"वृषे शशी लग्नगतः सुपूर्णो बुधोऽपि पातालगतो यदि स्यात्। ·
तदास्य जातो भवति क्षितीशः-॥" इति।

अस्य योगस्य वृषस्थस्य शशिनः सुपूर्णत्वे सूर्यस्य वृश्चिकस्थितिरेव संगच्छते। ततो बुधस्य सिंहस्थितिर्न घटते। इत्यसम्भाव्यत्वं विद्यते। इति चेदस्तु पूर्वशास्त्रानुसारेण कृतोऽयं योगः। दृष्टिप्रामाण्याय पुनरपि योगान्तरमस्ति। तथा हि तत्रैव सारावल्याम्-

"एकः स्वोच्चेशुभःस्याच्छुभगगनगः संस्थितो निर्मलांशुः
केन्द्रे भानुः प्रकटितबलः केवलं पूर्णवीर्यः।
दृष्टः कुर्यादमरगुरुणा पञ्चमस्थेन जातं
भूमेर्नाथं बहुगजयुतं सर्ववन्द्यं कृतार्थम् ॥" इति।

किल शब्देन ग्रहदृष्टेरनिश्चितत्वं सूचितम्-सर्वप्रश्नजातकनिरूपणेऽवश्यं विचार्यत्वं सूचितम्। पञ्चसप्तदशकिरणा मन्दगतिचन्द्रभार्गवशशिसुतरविभौमजीवानामिति ग्रहाणामुक्तम्। रश्मिविधौ पक्षान्तरमस्ति। विंशतिरष्टादशमनुषोडशकदशक-किरणाः स्युः सूर्यादीनां ज्ञेया इति। त्रिदशत्रिकोणचतुरस्रसप्तमान्सर्वे ग्रहाश्चरणा-भिवृद्धितः अवलोकयन्ति। ग्रहस्य स्वस्थानात्तृतीये भावारम्भे पाददृष्टिः तस्माद्वृद्धिं प्राप्य तृतीयचतुर्थभावसन्धौ पादोनदृष्टिः पूरिता भवति। पुनः ह्रासं प्राप्य चतुर्थपंचमसन्धौ अर्द्धदृष्टिर्जायते सा च ह्रासं प्राप्य पंचमषष्ठभावसन्धौ शून्या भवति। षष्ठारभ्य सप्तमभावसन्धौ पूर्णा भवति। पुनस्त-स्मादारभ्य ह्रासेन सप्तमाष्टमभावसन्धौ पादोना जायते। तस्मादपि ह्रासेन नवमा-दावर्द्धदृष्टिर्जायते। तस्मादपि नवमदशमादौ तथा पाददृष्टिर्जायते। श्लोकपूर्वार्द्धस्यै-षाभिप्रायः। अपरार्द्धस्य ननु रविजामरेज्यरुधिराः परे च क्रमशः वीक्षणेऽधिका-

स्तृतीयदशमयोः रविजोऽधिकस्त्रिकोणयोर्गुरुराधिकश्चतुरस्रयो रुधिरोऽधिक इत्यस्या-यमभिप्रायः तृतीयदशमयोः रविजस्य दृष्टिरधिका स्यात्तृतीये तु भावादौ पूर्णदृष्टिः । भावान्ते ह्रासेन पादोना जायते । दशमे तु भावादौ पष्टिरन्त्ये शून्या दृष्टिर्भवति गुरोस्तु पञ्चमादौ तु पूर्णा दृष्टिरन्त्ये शून्या । नवमे तु भावादौ पूर्णा । भावह्रासवशात्पाददृष्टिर्भवति । रुधिरस्य चतुर्थे भावादौ पूर्णा दृष्टिः पुनर्ह्रासेन भावान्तेऽर्द्धदृष्टिर्भवति अष्टमे तु भावादौ पूर्णदृष्टि-र्भूत्वा चतुर्थदृष्टिवद्ध्रासेन नवमेऽर्द्धा भवति । उपरितनभावदृष्ट्यनुगुणेन दृष्टेर्ह्रास-वृद्धी कल्प्याविति । अत्र द्वादशैकादशलग्नेषु वराहमिहिराचार्येण ग्रहदृष्टिर्नोक्ता तेष्वप्यस्तीति केचिद्वदन्ति । तथा च यवनेश्वरः–

"पादार्द्धञ्च तदर्द्धञ्च पूर्णमाये व्यये तनौ ॥" इति ।

अत्र लग्ने ग्रहस्थितभावसमांशके पूर्णदृष्टिः । व्यये षोडशांशदृष्टिरेकादशेऽष्टमांश-दृष्टिर्व्ययायलग्नेषु ग्रहदृष्टिः श्रीपतिना–विना कृताधिकं पश्यति न ग्रहेन्द्र इत्युक्त्वा-तथा दृष्ट्यानयनक्रियां पराशरमुनिराह–

"दृश्याद्विशोध्य द्रष्टारं षड्राशिभ्योऽधिके भजेत् ।
दृग्भ्यो विशोध्य द्वाभ्यां तु भागीकृत्य च दृष्टयः ॥
शराधिके विना राशिं भागाद्विघ्नाश्च दृष्टयः ।
वेदाधिके त्यजेद्भूत्वा भागा दृष्टिस्त्रिभाधिके ॥
विशोध्यार्णवतो द्वाभ्यां लब्धा त्रिंशद्युता भवेत् ।
कराधिके विना राशिं भागाश्च तिथिसंयुताः ॥
करादूने विना राशिं भागा द्वाभ्यां विभाजिताः ।
त्रिदशे च त्रिकोणे तु तुर्याब्दे च क्रमादिह ॥
शरवेदाः खरामाश्च तिथयो योजिताः क्रमात् ।
शनिदेवेज्यभूजानां क्रमादादौ भवन्ति हि ॥" इति ।

अत्रापि स्पष्टतरः श्रीधरपद्धत्यामुक्तो दृष्ट्यानयनप्रकारः सोत्रोच्यते ॥

"दृश्याद्विशोध्य द्रष्टारं ग्रहं भावादथापि वा ।
रूपास्यक्ताः करघ्नाः स्युर्भागा रूपाधिके सति ॥
विना राशिं करात् द्वौ राशी चेत्तिथिसंख्यकाः ।
कराधिके विना राशिं भागास्तिथियुताः क्रमात् ॥
विनार्किमार्के: षष्टिः सागरसंख्येऽधिके करौ ।
हित्वा विभक्तिहीना सा षष्टिदृष्टिर्भवेदथ ॥
त्रिराशयश्चेत्तद्भागा भक्ता द्वाभ्यां च दृष्टयः ।
राशित्रयाधिक राशिं भागीकृत्य कलीकृतात ॥

( प्रहर्षिणी )

त्रिदशत्रिकोणचतुरस्रसप्तमा-
न्यवलोकयन्ति चरणाभिवृद्धितः ।
रविजामरेज्यरुधिराः परे च ये
क्रमशो भवन्ति किल वीक्षणेऽधिकाः ॥ १३ ॥

चतुरस्रमध्यमा परे च ते चरणाभिवृद्धितं अवलोकयन्ति ग्रहा इति सिद्धं भवति। तत्रायं विशेषः। रविजामरेज्यरुधिराः ये परे च तेः वीक्षणेऽधिकाः। त्रिदशत्रिकोणयोश्चतुरस्रयोः सप्तमे च वीक्षणेऽधिकाः फलप्रदाः भवन्ति। समग्रफलदा भवन्तीत्यर्थः। अत्र न केवलं सप्तमे दृष्टे विनियोगः। अन्यस्थानामपि पादार्धपादोनदृष्टीनामपि जन्मकाले निरूपणीयत्वमश्यमेव। तथा च सारावल्याम्-

"वृषे शशी लग्नगतः सुपूर्णो बुधोऽपि पातालगतो यदि स्यात्। तदाऽस्य जातो भवति क्षितीशः-॥" इति।

अस्य योगस्य वृषस्थस्य शशिनः सुपूर्णत्वे सूर्यस्य वृश्चिकस्थितिरेव संगच्छते। ततो बुधस्य सिंहस्थितिर्न घटते। इत्यसम्भाव्यत्वं विद्यते। इति चेदस्तु पूर्वशास्त्रानुसारेण कृतोऽयं योगः। दृष्टिप्रामाण्याय पुनरपि योगान्तरमस्ति। तथा हि तत्रैव सारावल्याम्-

"एकः स्वोच्चेशुभःस्याच्छुभगगनगः संस्थितो निर्मलांशुः
केन्द्रे भानुः प्रकटितबलः केवलं पूर्णवीर्यः।
दृष्टः कुर्यादमरगुरुणा पञ्चमस्थेन जातं
भूमेर्नाथं बहुगजयुतं सर्ववन्द्यं कृतार्थम् ॥" इति।

किल शब्देन ग्रहदृष्टेरनिश्चितत्वं सूचितम्-सर्वप्रश्नजातकनिरूपणेऽवश्यं विचार्यत्वं सूचितम्। पञ्चसप्तदशकिरणा मन्दगतिचन्द्रभार्गवशशिसुतरविभौमजीवानामिति ग्रहाणामुक्तम्। रश्मिविधौ पक्षान्तरमस्ति। विंशतिरष्टादशमनुषोडशकदशककिरणाः स्युः सूर्यादीनां ज्ञेया इति। त्रिदशत्रिकोणचतुरस्रसप्तमान्सर्वे ग्रहाश्चरणाभिवृद्धितः अवलोकयन्ति। ग्रहस्य स्वस्थानात्तृतीये भावारम्भे पाददृष्टिः तस्माद्वृद्धिं प्राप्य तृतीयचतुर्थभावसन्धौ पादोनदृष्टिः पूरिता भवति। पुनः ह्रासं प्राप्य चतुर्थपंचमसन्धौ अर्द्धदृष्टिर्जायते सा च ह्रासं प्राप्य पंचमषष्ठभावसन्धौ शून्या भवति। षष्ठारभ्य सप्तमभावसन्धौ पूर्णा भवति। पुनस्तस्मादारभ्य ह्रासेन सप्तमाष्टमभावसन्धौ पादोना जायते। तस्मादपि ह्रासेन नवमादावर्द्धदृष्टिर्जायते। तस्मादपि नवमदशमादौ तथा पाददृष्टिर्जायते। श्लोकपूर्वार्द्धस्यैषाभिप्रायः। अपरार्द्धस्य च तु रविजामरेज्यरुधिराः परे च क्रमशः वीक्षणेधिका-

स्तृतीयदशमयोः रविजोऽधिकस्त्रिकोणयोर्गुरुराधिकश्चतुरस्रयो रुधिरोऽधिक इत्यस्यायमभिप्रायः तृतीयदशमयोः रविजस्य दृष्टिराधिका स्यात्तृतीये तु भावादौ पूर्णदृष्टिः । भावान्ते ह्रासेन पादोना जायते । दशमे तु भावादौ षष्टिरन्त्ये शून्या दृष्टिर्भवति गुरोस्तु पञ्चमादौ तु पूर्णा दृष्टिरन्त्ये शून्या । नवमे तु भावादौ पूर्णा । भावह्रासवशात्पाददृष्टिर्भवति । रुधिरस्य चतुर्थे भावादौ पूर्णा दृष्टिः पुनर्ह्रासेन भावान्तेऽर्द्धदृष्टिर्भवति अष्टमे तु भावादौ पूर्णदृष्टिर्भूत्वा चतुर्थदृष्टिवद्ध्रासेन नवमेऽर्द्धा भवति । उपरितनभावदृष्टयनुगुणेन दृष्टेर्ह्रासवृद्धी कल्प्याविति । अत्र द्वादशैकादशलग्नेषु वराहमिहिराचार्येण ग्रहदृष्टिर्नोक्ता तेष्वप्यस्तीति केचिद्वदन्ति । तथा च यवनेश्वरः-

"पादार्द्धश्च तदर्द्धश्च पूर्णमाये व्यये तनौ ॥" इति ।

अत्र लग्ने ग्रहास्थितभावसमांशके पूर्णदृष्टिः । व्यये षोडशांशदृष्टिरेकादशेऽष्टमांशदृष्टिर्व्ययायलग्नेषु ग्रहदृष्टिः श्रीपतिना-विना कृताधिकं पश्यति न ग्रहेन्द्र इत्युक्त्वा तथा दृष्ट्यानयनक्रियां पराशरमुनिराह-

"दृश्याद्विशोध्य द्रष्टारं षड्राशिभ्योऽधिके भजेत् ।
दृग्भ्यो विशोध्य द्वाभ्यां तु भागीकृत्य च दृष्टयः ॥
शराधिके विना राशिं भागाद्विघ्नाश्च दृष्टयः ।
वेदाधिके त्यजेद्भुक्त्वा भागा दृष्टिस्त्रिभाधिके ॥
विशोद्ध्यार्णवतो द्वाभ्यां लब्धा त्रिंशद्युता भवेत् ।
कराधिके विना राशिं भागाश्च तिथिसंयुताः ॥
करादूने विना राशिं भागा द्वाभ्यां विभाजिताः ।
त्रिदशे च त्रिकोणे तु तुर्याब्दे च क्रमादिह ॥
शरवेदाः स्वरामाश्च तिथयो योजिताः क्रमात् ।
शनिदेवेज्यभूजानां क्रमादादौ भवन्ति हि ॥ " इति ।

अत्रापि स्पष्टतरः श्रीधरपद्धत्याम्रुक्तो दृष्ट्यानयनप्रकारः सोत्रोच्यते ॥

"दृश्याद्विशोध्य द्रष्टारं ग्रहं भावादथापि वा ।
रूपास्त्यक्ताः करघ्नाः स्युर्भागा रूपाधिके सति ॥
विना राशिं करात्तं द्वौ राशी चेत्तिथिसंख्यकाः ।
कराधिके विना राशिं भागास्तिथियुताः क्रमात् ॥
विनार्किमार्कैः षष्टिः सागरसंख्येऽधिके करौ ।
हित्वा विभक्तिर्हीना सा षष्टिर्दृष्टिर्भवेदथ ॥
त्रिराशयश्चेत्तद्भागा भक्ता द्वाभ्यां च दृष्टयः ।
राशित्रयाधिके राशिं भागीकृत्य कलीकृताव ॥

भागाद्ध वर्जयेद्भौमं विना तस्याधिके सति ।
षष्टिस्तदधिकेंशाश्च वर्जयेत्षष्टितो भवेत् ॥
वेदसंख्ये गुरोः षष्टिरन्येषां त्रिंशदेव च ।
वेदाधिक्ये त्यजेद्भूतादन्येषामंशकाद्गुरोः ॥
द्विघ्नाश्च राशेर्नास्त्येव दृष्टिः पञ्चाधिके तथा ।
राशिं विनांशा द्विघ्नाः स्युः षट्के षष्टिदृशः स्मृताः ॥
दिग्भ्यस्तदधिके शोध्या द्वाभ्यां लब्धाश्च दृष्टयः ।
भौमस्य सप्त चेत् षष्टिरधिके भागवर्जिताः ॥
अष्टौ यदा गुरोः षष्टिरधिकेंशास्त्रिसंगुणाः ।
द्वाभ्यां लब्धोनिताः षष्टिः शनेः षष्टिः शुभाः स्मृताः ॥
अधिकेंशाः करघ्नाः स्युः शोध्या दृष्टिश्च षष्टिके ।
त्रिंशाशयोः दूरगते० ...................... ॥
राशीनां दश हे न स्याच्चक्रात्तदधिके सति ।
विशोद्ध्याद्धि विभक्ताश्च भागा नव च दृष्टयः ॥
एकादशाधिके चक्राद्विशोद्ध्याष्टविभाजितम् । " इति ।

अत्र त्रिदशादिस्थानेषु ग्रहाणां या दृष्टिरुदिता सा दृष्टिर्मुहूर्तादौ न गृह्यते । तत्र सप्तमदृष्टिरेव गृह्यते । अत्र निरूपितया ग्रहदृष्ट्या कालान्तरेण नष्टादिद्रव्यनिर्णयः क्रियते । ग्रहदृष्टिसमानरश्मिसंख्यातुल्यादिद्रव्यसंख्येति । रश्मिसंख्याः शास्त्रान्तरादवगन्तव्याः । तथा च कृष्णीये-

"चतुरेकविंशषोडशदशसंख्याः पंचसप्तदशकिरणाः ।
मन्दगतिचन्द्रभार्गवशशिसुतगविभौमानाम् ॥ " इति ।
"लग्नात्पुत्रकलत्रभे शुभपतिप्राप्तेऽथवालोकिते
चन्द्राद्वा यदि सम्पदस्ति हि तयोर्ज्ञेयोऽन्यथासंभवः ॥ "

इत्यत्र दृष्ट्यानयनं कर्तव्यम्-'दृष्ट्या समानं प्रवदेच्च संख्याम्' इत्यत्रापि दृष्टिसंख्या नेतव्या । अत्रोक्तानां रश्मीनां ग्रहाणां चारवशादधिककिरणाः स्युरूनाधिकत्वमस्ति । मित्रगृहे पादसंख्या स्वगृहे च पादोनसंख्या । उच्चे सम्पूर्णसंख्या । त्रिकोणेऽर्द्धसंख्या रश्मयः । नीचराशौ विफलाः । शत्रुक्षेत्रे स्वल्पफला । ग्रहनिहत ग्रहतिरस्कृता, ग्रहापसव्यगताश्चाफलाः । तथा च कृष्णीये-

"मित्रस्वोच्चर्क्षगताः त्रिकोणसहिता ग्रहाः फलं दद्युः ।
पादं पादोनसंपूर्णं फलं तथार्द्धं च ॥

नीचर्क्षगताः विफलाः रिपुभवनगता भवन्ति चाल्पफलाः।
निहता ग्रहेण हीनांशकोपसव्येन संयुक्ताः॥"

ग्रहदर्शने बलवतादानीतरश्मिरनुक्रमेण दृष्टिवशाच्चतुर्विभज्य वा द्वाभ्यां विभज्य वैकैकेन विभज्य वा पाददृष्टौ पादोनदृष्ट्यावर्द्धदृष्टौ सप्तमदृष्टौ च क्रमेण फलं लब्धं च ग्राह्यम्। तत्रष्टद्र्यादिसंख्यामानम् इति उत्तरत्र वक्ष्यति च–

"उच्चत्रिकोणस्वसुहृच्छत्रुनीचगृहार्कगैः।
शुभसंपूर्णपादोनदलपादाल्पनिष्फलम्॥" इति।

अपिचानेन श्लोकेन ग्रहाणां कक्षाक्रमं कालहोराधिपत्यं च सूत्रयति। सर्वेषामुपरि नक्षत्राणि, तदधः शनैश्चरस्तदधो गुरुस्तदधो भौमस्तदधो रविस्तदधः शुक्रस्तदधो बुधस्तदधश्चन्द्रः। तदुक्तम्–

"रविजामरेज्यरुधिराः परे च ये क्रमशो भवन्ति किल वीक्षणेऽधिकाः॥ १३॥

(आर्या)

अयनक्षणवासरर्तवो मासाऽर्द्धं च समाश्च भास्करात्।
कटुकलवणातिक्तमिश्रिता मधुराम्लौ च कषाय इत्यपि॥१४॥

स लग्नोदितांशैर्गुणितैः कार्य... ...माणम्। अन्येऽन्यथा कालं निर्णयन्ति। येन ... य कालोयनादिकः स्वावस्थितराशौ स्वभुक्तनवांशकैर्गुणिता पृष्टफललब्धे काल इति। तथाच कृष्णीये–

"क्षणदिवसपक्षमासस्त्वयनाब्दानां नवांशकैर्वाच्यम्।
शशिभौमशुक्रसुरगुरुबुधरविसौरैः क्रमाद्युक्तः॥" इति।

अनेन श्लोकेन गर्भकालोपि सूचितः। रसुराचितकालो नाडिकाद्वितयं षोडश-दिवसे नव एव गर्भकालः।

कटुकेत्यादि–सूर्यादारभ्य ग्रहाणां रसाः। जन्मकाले केन्द्रगतग्रहरसाभिराचितं भोजनप्रश्नादारूढवशाद्वा केन्द्रगतैर्ग्रहैर्वा पष्ठस्थानेन वा षड्साश्चिन्त्याः। उदयारूढयोर्बलवति नाशो वीजे रूक्षमन्नं युग्मे सौम्यं जलराशौ च क्रूरसौम्येत्युक्तत्वाज्जलराशौ जलग्रहदृष्टियोगे चार्द्रान्नम्। तथा चोक्तम्–

"शुभोदये भवेन्मिष्टं भोजनं जीवनाश्रयम्।
शुभराश्युदये तद्वदार्द्रं युग्मजलर्क्षयोः॥
पापोदये क्रूरलग्ने रूक्षमत्युग्रकारकम्।" इति।

भौमस्यारिविमर्देत्यादिश्लोके एकाधिपत्य त्युक्तम्। भौमस्य त... म्बन्धे 'माहिषं दधिरित्यादि'। चन्द्रसम्बन्धे 'इक्षुक्षीरविकारादि' चिन्त्यमित्याघ्रहम्। 'निगदितमिह चिन्त्यं सूतिकालेपि ... या' इत्युक्तत्वात्सर्वत्र देशजाति-

काला निरूपणीयाः । चतुष्पाद्राशौ वा वाच्यम् । 'अन्तःसारान' इत्यादिनोपदेशा- दिभेदाश्चिन्त्याः । ते चरागद्विदेहा इत्युक्तविधिना आसन्नस्य चरादित्वं चिन्त्यम् । जीर्णं संस्कृतमित्यादिना ग्रहविशेषाश्चिन्त्याः । इत्यादिना राशिप्लववशेन च भोक्तुः प्रागाद्यभिमुखत्वमूह्यम् ।

"मधुराम्लौ' इति समासद्वयोर्गुरुशुक्रयोः मधुराम्लसम्बन्धोऽभिमेतः ॥ १४ ॥

(शार्दूलविक्रीडितम्)

जीवो जीवबुधौ सितेन्दुतनयौ व्यर्का विभौमाः क्रमा-
द्वीन्द्वर्का विकुजेन्द्विनाश्च सुहृदः केषांचिदेवं मतम् ।
सत्योक्ते सुहृदस्त्रिकोणभवनात्स्वात्स्वांत्यधीधर्मपाः
स्वोच्चायुःसुखपाः स्वलक्षणविधेर्नान्यैर्विरोधादिति ॥ १५ ॥

केषांचिदिति यवनेश्वरादीनामित्यर्थः । सत्योक्तेरिति सत्यमतः प्रश्नादौ केचित् यवनमतेन नैसर्गिकबन्धुभावमंगीकृत्य सत्यमतेन तत्कालबंधुभावं परिकल्पयन्ति । पक्षे स्वान्त्यादिस्थानानामधिपतयो न गृह्यन्ते । तेषु स्थिता गृह्यन्ते । एतदुक्तं भवति । यस्य ग्रहस्य यत्त्रिकोणराशिस्तस्य ग्रहस्य तस्मात्त्रिकोणाः स्वान्त्यादिस्था- नगतास्तत्कालबन्धवो भवन्ति । अस्य स्थानगताः शत्रवो भवन्ति । तथात्र कृष्णीये-

"मलत्रिकोणभवनाच्चतुर्थपंचमधनव्ययाष्टमगाः ।
स्वोच्चे धर्मे च गताः ग्रहास्तु तात्कालिकाः सुहृदः ॥" इति ।

जातकेषु सत्यमतेन नैसर्गिकबान्धवं परिकल्प्यान्योऽन्यस्येति वक्ष्यमाण- विधिना तत्कालबान्धवं परिकल्पयन्त्येके । अन्ये तु यवनमतेन बन्धुशत्रुभावं मूलत्रिकोणभवनादित्यादिविधिना तत्कालबान्धवं परिकल्प्य प्रश्नजातकादिफलं निरूपयन्ति । ॥ १५ ॥

(शार्दूलविक्रीडितम्)

शत्रू मंदसितौ समश्च शशिजो मित्राणि शेषा रवे-
स्तीक्ष्णांशुर्हिमरश्मिजश्च सुहृदौ शेषाः समाः शीतगोः ।
जीवेन्दूष्णकराः कुजस्य सुहृदो ज्ञोऽरिः सितार्की समौ
मित्रे सूर्यसितौ बुधस्य हिमगुः शत्रुः समाश्चापरे ॥ १६ ॥

(शार्दूलविक्रीडितम्)

सूरेः सौम्यसितावरी रविसुतो मध्योऽपरे त्वन्यथा
सौम्यार्कौ सुहृदौ समौ कुजगुरू शुक्रस्य शेषावरी ।

शुक्रज्ञौ सुहृदौ समः सुरगुरुः सौरस्य चान्येऽरयो
ये प्रोक्ताः स्वत्रिकोणभादिषु पुनस्तेऽमी मया कीर्तिताः॥१७॥

शत्रू मन्दसितौ इत्यादिश्लोकद्वयं स्पष्टार्थम् ॥ १६ ॥ १७ ॥

(शार्दूलविक्रीडितम्)

अन्योन्यस्य धनव्ययायसहजव्यापारबंधुस्थिता-
स्तत्काले सुहृदः स्वतुंगभवनेऽप्येकेऽरयस्त्वन्यथा ।
द्रेकानुक्तभपान्सुहृत्समारिपून्संचिन्त्य नैसर्गिकां-
स्तत्काले च पुनस्तु तानधिसुहृन्मित्रादिभिः कल्पयेत् ॥१८॥

अन्योऽन्यस्य धनव्ययादिगतः तत्काले सुहृदः । धनव्ययादिव्यतिरिक्तस्थानगतास्तत्कालशत्रवः । द्रेकानुक्तभपानित्यादि । तस्य श्लोकस्यापरार्द्धस्यायमर्थः । सत्योक्ते सुहृद इति । द्रेकानुक्तभपान्सुहृत्समारिपून्नैसर्गिकान्संचिन्त्य तत्कालेन जातैरिति । सुहृन्मित्रादिभिरुपलक्षितांस्तान्कल्पयेत् । अस्मिन् श्लोके किंचिदर्थान्तरमपि सूचितम् । लग्नेशाद्धनव्ययादिस्थानेषु यद्भावाधिपस्थितस्तद्भावसंमृद्धिः पित्रादिकारका भवन्तः । शुभदृष्टलग्नेशादुक्तस्थानेषु गताश्चेतेषु पित्रादयोऽतिसुहृदो भवन्ति । तद्भावादपि धनव्ययादिस्थानगताः स्थानबलं पित्रादिकारकाश्चेत्पित्रादयोऽतिसुहृदो भवन्ति ॥ १८ ॥

(दोधकम्)

स्वोच्चसुहृत्स्वत्रिकोणनवांशैः
स्थानबलं स्वगृहोपगतैश्च ।
दिक्षु बुधांगिरसो रविभौमौ
सूर्यसुतः सितशीतकरौ च ॥ १९ ॥

अथ बलाबलमाह-

इति चतुष्प्रकारं बलमुच्यते । स्थानबलं, दिग्बलं, चेष्टाबलं, कालबलं चेति । अस्य श्लोकस्य पूर्वार्द्धेन स्थानबलमपरार्द्धेन दिग्बलमुच्यते । स्वोच्चे सुहृद्गृहे स्वद्रेष्काणे स्वनवांशे च स्थितो ग्रहः स्थानबलयुक्तो भवति । स्वगृहोपगतैश्च स्थानबलं भवति । स्वगृहस्थितस्थानबलयुक्तश्च भवतीत्यर्थः । अत्र चतुर्षु ग्रहेषु स्थानबलस्य प्राधान्यमस्ति । चन्द्रस्य तु पक्षबलस्य प्राधान्यम् । तथा चोक्तम्-

"पक्षोद्भवं हिमकरस्य विशिष्टमाहुः
स्थानोद्भवं तु बलमभ्यधिकं परेषाम् ।

तत्संप्रयुक्तमितरैराधिकाधिकं स्या-
दन्यानि तेन सदृशानि बहूनि चेत्स्युः ॥
सुहृदरिपरकीयः स्वर्क्षतुङ्गस्थितानां
फलमनुपरिचिन्त्यं लग्नदेहादिभावैः ।" इति ।

वक्ष्यति तेनापि स्थानबलप्राधान्यमूह्यम् । चन्द्रस्य पक्षबलप्राधान्यं तु विपुलकरा इति । चेष्टाबलकथने 'बहुलसितगताः स्युः क्रूरसौम्याः क्रमेण' इति कालबलकथने चन्द्रस्य पक्षबलस्यान्तर्भावात्कथितः । ननु तदन्तर्भावसामान्य एव तस्मात्कथं प्राधान्यं व्यज्यते, उच्यते-'शशुगुरुशुचराद्या वृद्धितो वीर्यवन्तः' इति निसर्गबलकथने मण्डलवृद्धिरप्युक्ता तेन चन्द्रस्य ताराग्रहेभ्यो मण्डलवृद्धिरस्तीति सिद्ध्यति । बहुलपक्षे तु मण्डलस्य क्षीयमाणत्वात्प्रत्यक्षतोऽपि बलहानेः सिद्धत्वे कथमुपदेष्टव्यमिति नोक्तम् । स्वगृहोपगतैरित्यत्र स्त्रीराशौ स्त्रीग्रहो पुरुषराशावोजराशौ बलवन्त इत्युक्तं भवति । स्वगृहोपगतैश्चात्र गतशब्देन राशिगतशब्देन राशिगतवशाद्ग्रहाणां बलभेदोऽस्तीति ज्ञापितम् । आद्यद्रेष्काणे स्त्रीग्रहस्य बलम् । मध्यद्रेष्काणे नपुंसकस्य बलम् । अन्त्यद्रेष्काणे पुरुषस्य बलम् । तथा च सारावल्याम्-

"स्त्रीपुंनपुंसकाख्यां क्षेत्रेष्वाद्यन्तमध्यसंप्राप्ताम् । "

स्वत्रिकोणनवांशैरितिस्थाने 'स्वद्रेष्काणनवांशैः' इति पाठः । अत्र 'स्वोच्चसुहृत्स्वद्रेष्काणनवांशैः' इत्यत्र त्रिकोणगृहं कस्मान्नोक्तमुच्चग्रहयोस्त्रिकोणगृहस्यान्तर्भावादुच्चत्रिकोणस्वसुहृदित्यत्र त्रिकोणगृहं वक्ष्यति । उच्चादिराशिषु ग्रहबलस्य बलसाम्यं न भवति उच्चेतिबलम् । तस्मान्न्यूनं त्रिकोणे । तस्मान्न्यूनं स्वगृहे । तस्मान्न्यूनमतिसुहृद्गृहे । तस्मान्न्यूनं सुहृद्गृहे । तस्मान्न्यूनं समगृहे । तस्मान्न्यूनमरिगृहे । तस्मान्न्यूनमतिरिपुगृहे । नीचराशौ फलशून्यं भवति । इति नवप्रकारं स्थानबलम् । तथा च श्रीपतिपद्धतौ-बलवशाच्छुभफलमुच्यते ।

"स्वोच्चेरूपं चरणरहितं स्वत्रिकोणे स्वभेऽर्द्धं
नागांशानां त्रयमतिसुहृद्गेहगे मित्रभेऽङ्घ्रिः ॥
अंशाष्टानां समगृहगते भूपभागोऽरिगेहे
दन्तांशः स्यादतिरिपुभवने नीचभे शून्यमेव ॥ " इति ।

ननूच्चक्षेत्रयोरेकमेव त्रिकोणगृहे भवति । तस्मात्कथं त्रिकोणगृहे फलविशेषोऽवगम्यते, उच्यते-उच्चत्रिकोणयोर्विभागोऽस्ति तदाचार्येण नोक्तम्- तथा च सारावल्याम् ।

"विंशतिरंशाः सिंहे त्रिकोणमपरेऽस्य भवनमर्कस्य"

किमेतदाचार्यस्याभिमितमभिमेतमेवोत्तरत्र कारकाध्याये स्वर्क्षतुङ्गमूलत्रिकोणगा इति।

"उच्चत्रिकोणस्वसुहृच्छत्रुनीचगृहार्कगैः।
शुभसम्पूर्णपादोनदलपादाल्पनिष्फलम्॥" इति।

अथ दिग्बलमुच्यते।

'दिक्षु बुधांगिरसौ' इति दिक्शब्देन लग्नदशमसप्तमचतुर्थराशयः उच्यन्ते। तेषु यथाक्रममेकैकपादोक्ताः 'बुधाङ्गिरसौ' इत्यादयो बलवन्तस्तथा च सारावल्याम्—

"लग्ने जीवबुधौ दिवाकरकुजौ व्योम्न्यस्तगो भास्करि-
र्बन्धाविन्दुसितौ दिशाकृतमिदं स्वोच्चत्रिकोणे ग्रहे।
मित्रस्वांशकसंस्थितः शुभग्रहैर्दृष्टो बलीयान् ग्रहः
स्वक्षेत्रे शशिभार्गवौ नरगृहे शेषा बले स्थानजे॥" इति।

एकस्मिन् श्लोके पूर्वार्द्धेन स्थानबलमपरार्द्धेन दिग्बलं चोच्यते तत्र पूर्वार्द्धे स्वोच्चसुहृदित्यादौ प्रथमाविभक्तिविशेषणपदं बलयुता इत्यादि तस्माद्गृह्यते उच्यते। उत्तरश्लोके 'चेष्टितवीर्ययुतौ' इति वक्ष्यति तस्माद्वीर्ययुतावित्याकृष्य सम्बध्यते। अस्तु तर्हि किमर्थमस्मिञ्श्लोके बलशब्देन सह हेतुतृतीयायुक्तः तत्स्थानबलप्राधान्यार्थमिति विद्धि बलं भवतीति। भवनक्रियायां कर्तृभूतो बलशब्दः इति प्राधान्यम्। चेष्टितवीर्ययुतावित्यत्र वीर्यशब्दस्य गुणत्वमिति विशेषः। अन्यच्च दिग्बलस्य चेष्टाबलेन सादृश्यम् इति॥ १९॥

(संकलिः)

उदगयने रविशीतमयूखौ
वक्रसमागमगाः परिशेषाः।
विपुलकरा युधि चोत्तरसंस्था-
श्चेष्टितवीर्ययुताः परिकल्प्याः॥ २०॥

अथ चेष्टाबलमुच्यते।

उत्तरमार्गेण गच्छन्तो बलवन्तो चेष्टाबलयुक्तावुत्तरायणे मृगादिमासषट्के इति केचित्। तत्सूर्यस्य युक्तं न चन्द्राय घटते। चेष्टाबलत्वाच्चन्द्रस्यापि रवेरुत्तरायणे बलमिति विवक्षा चेत्तत्कालबलं स्यात्तस्मात्ततो मार्गेण गतिरुदगयनमित्युक्तम्। चन्द्रस्य चेष्टाबलं सितपक्षे तत्र नोक्तम्। कालबलान्तर्भावात्। वक्रसमागमगाः परिशेषाः इति वक्रगाः विलोमगतयः समागमगाः चन्द्रसहिताः विपुलकराः विस्तीर्णरश्मयः युधि चोत्तरसंस्थाः युद्धे उत्तरमार्गगताः चशब्देन विपुलकरत्वादि।

दक्षिणदिक् तस्यापि विजयित्वमस्ति । एतच्छुक्रस्य संभवतीति । एतैश्चेष्टावीर्ययुता, विपुलकरा इत्यत्रोच्चनीचवशाद्रश्म्यानयनमस्ति तच्च गृह्यते । विपुलकराः बहुरश्मय इत्युक्तास्तदानयनं सारावल्याम् उक्तम् । तच्चात्र लिख्यते-

"स्वोच्चस्थे दश सूर्ये नव चन्द्रे सप्त भूमितनये च ।
पञ्चेन्दुजे तथेज्ये सप्ताष्टौ भार्गवे च शनेः ॥"

पंच एव महेन्द्रशास्त्रे मणित्थयवनेन्द्रबादरायणप्रोक्ते सप्त प्रत्येकस्थानानिर्दिष्टा रश्मयो ग्रहेन्द्राणामभिमुखरश्मिर्नीचाद्भ्रष्टः स्वोच्चात्पराङ्मुखो ज्ञेयः । अन्तर्गतेऽनुपातो यथा तथा संप्रवक्ष्यामि । "नीचविहीनश्चक्राच्छुद्धं षड्भावतो यदाभ्यधिकः । आत्मीयरश्मिगुणिताः षड्भक्ताः रश्मयः स्युः" इति । हरणगुणने च कर्तव्ये तदा तदपि शास्त्रान्तरे कथितम् । मूढानां रश्मयो नेष्टदलम् । शुक्रार्कपुत्रयोः । शत्रुनीचद्वादशांशगतः षोडशभागह्यो ग्रहो वक्रनिर्मुक्तः सोष्टमांशं हरति । अथ-

"क्षेत्रोच्चद्वादशांशस्थे ग्रहे रश्मिश्चतुर्गुणः ।
मित्रद्वादशभागस्थे द्विघ्नो वक्रार्कगे तथा ॥
सुकृती यस्य जनने रश्मिः पंचदशाधिकः ।
संशून्यं यस्य जनने रश्मिः पंचदशाधिकः ॥
रश्मीनां यावदाधिक्यं तावत्सुकृतिनो जनाः ।"

इति चेष्टाबलम् ॥ २० ॥

( मालिनी )

**निशि शशिकुजसौराः सर्वदा ज्ञोऽह्नि चान्ये**
**बहुलसितगताः स्युः क्रूरसौम्याः क्रमेण ।**
**द्व्ययनदिवसहोरामासपैः कालवीर्यं**
**शरुबुगुशुचराद्या वृद्धितो वीर्यवन्तः ॥ २१ ॥**

इति श्रीमदावन्तिकाचार्यद्विजवराहमिहिरकृते बृहज्जातके ग्रहयोनिप्रभेदाध्यायो द्वितीयः ॥ २ ॥

अथ कालबलमुच्यते ।

...शिकुजसौराः निशि बलिनः । बुधो निशि दिवा च बलवान् । रविशुक्रजी अह्नि वीर्ययुताः । इति पूर्वश्लोकादाकृष्य संबध्यते । बहुलसितगताः । कृष्णपक्षगः क्रूरसौम्याश्च क्रमेण बलयुताः । क्रमशब्दोऽत्र क्रूरसौम्यकृष्णशुक्लपक्षविषयः । अथवा कृष्णपक्षे प्रतिपदादितिथिषु क्रूराः क्रमेण बलवन्तः शुक्लपक्षे सौम्याश्च तद्वदिति सूचितम् । स्वदिवससमहोरामासपैः कालवीर्यम् इति पाठान्तरमस्यार्थः।

स्वदिवसः स्ववासरः । स्वसमः स्वसंवत्सरः । स्वहोरा स्वमासश्चेतः ग्रहाणां कालवीर्यं भवति । एतेषु यदल्पकालस्तस्मिन्काले बलाधिक्यम् । ततः क्रमेण कालाधिकेषु बलस्य न्यूनत्वं चाभिमतम् । कालहोरायां यत्कालबलं ततो न्यूनं स्वदिवसे । ततो न्यूनं स्वमासे । ततो न्यूनं स्वसंवत्सरे । कालबलमिति । तथा च श्रीपतिपद्धतौ—

"पादं स्ववर्षे तदर्धं स्वमासे दिने स्वकीये चरणोनरूपम् ।
रूपं स्वहोरास्थितिकालवीर्यमुक्ता हि होरा निपुणैः पुराणैः ।"

बलचतुष्टयमुपादिष्टम् । अनुपादिष्टमयनबलमुपदिष्टमाचार्येण गूढत्वान्न विज्ञायते । इति वा सर्वथा शास्त्रोतरादवगम्य लिख्यते । उत्तरेण गच्छन्तः शुक्रकुजार्केन्दुमन्त्रिणो बलिनः । याम्येन गच्छन्तौ चन्द्रशनी बलिनौ । उभयमार्गेण गच्छन्बुधो बली । तथाच सारावल्याम्—

"प्राग्रात्रिभागेऽतिबली शशाङ्कः शुक्रो निशार्धेऽवनिजो निशान्ते ।
प्रातर्बुधो मध्यदिने च सूर्यः सर्वत्र जीवोऽर्कसुतो दिनान्ते ॥" इति ।

एवं चतुष्प्रकारं बलमुक्तमेषु चतुर्षु बलेषु प्राधान्येन निरूपणीयं स्थानबलम् । तदाचार्येण बहुधा सूचितमेव । 'उच्चत्रिकोणस्वसुहृत्' इत्यादिना । 'सुहृदरिपरकीय' इत्यादिना च । 'कुलसमकुलमुख्यः' इत्यादिना चान्यैश्च स्थानबलस्य प्राधान्यमुह्यम् ।

चेष्टाबलेषु वक्रबलमुच्चबलं तुल्यमेव । 'स्वतुङ्गवक्रोपगतैस्त्रिसंगुणम्' इत्यादिना तत्सिध्यति । तथा च सारावल्याम्—

"उच्चे राशौ विलोमे च फलं नान्यैर्हरिष्यते ।
कालस्यातिबलत्वं स्यात्तस्मात्स्वोच्चेतिवाक्रिता ॥
वक्रिणस्तु महावीर्याः शुभा राज्यप्रदायकाः ।" इति ।

तथाचोक्तमन्यत्र—

"नीचारातिगृहेषु वक्रगमनं पुष्णाति नैसर्गिकं
वीर्यं तद्द्विगुणं तु मध्यमगृहे तुङ्गोपमं मित्रभे ।
स्वक्षेत्रेपुच्चसमं भवेद्दशगुणं स्वोच्चे तदुच्चांशके
तच्चान्यैरपि संयुतं यदि बलैस्तत्पादनं बलम् ॥" इति ।

उच्चादिस्थानसंज्ञाभेदाः फलभेदाश्च सन्ति । तदत्र 'स्वोच्चसुहृत्' इत्यादिस्थानबलमुपादिष्टम् । तदन्यत्र शास्त्रान्तराच्छिष्यहिताय लिख्यते । तथा च सारावल्याम्—

"स्वोच्चे तु भवति दीप्तः स्वस्थः स्वगृहे सुहृद्गृहे मुदितः ।
शान्तः शुभवर्गस्थो शक्तः स्फुरत्किरणजालश्च ॥

विकलो विलुप्तकिरणो ग्रहाभिभूतः प्रपीडितश्चैव ।
पापगणस्थश्च खलो नीचे भीतः समाख्यातः ॥ " इति ।
"दीप्ते विचरति पुरुषः प्रतापविषमो निदग्धारिपुनिचयः ।
लक्ष्म्यालिङ्गितदेहो गजमदसंसिक्तभूपृष्ठः ॥
स्वस्थः करोति जन्मनि सुखं नरश्चाश्वकनकपरिवारान् ।
नृपतेर्दण्डपतित्वं समंततो गृहधान्यपरिवृद्धिम् ॥
मुदिते विलसति मुदितो विलासिनीकनकरत्नपरिपूर्णः ।
विजितसकलारिपक्षः समस्तसुखभाङ्नरो भवति ॥
शान्ते प्रशान्तचित्तो धनभोगी महीपतेः सचिवः ।
विद्वान्परोपकारी धर्मपरो जायते मनुजः ॥
स्त्रीवस्त्रगन्धमाल्यैर्विलसति पुरुषः सदा विततकीर्तिः ।
दयितः सर्वजनस्य च शक्ताख्ये भवति विख्यातः ॥
दुःखैर्व्याधिभिरारिभिः प्रपीड्यते पीडिते मनुजः ।
भीतो देशं विचरति बन्धुवियोगादिसंतप्तः ॥
बहुधाऽधनोपि राजा प्राप्तबलः पीड्यते रिपुणा ।
नाशमुपयाति विजितो भीते दैन्यं परं प्राप्तः ॥
स्वस्थानपरिभ्रष्टः क्लिष्टो मलिनः प्रयाति परदेशम् ।
विध्वस्तबलो विकलो रिपुभयशंकाचकितचकितश्च ॥
स्त्रीमरणदुःखतप्तः, समस्तधननाशकलुषितमनस्कः ।
न जहाति शोकभारं कथमपि खलसंज्ञिते पुरुषः ॥" इति ।

पुनरपि राश्याश्रयफलमस्ति ।

"उच्चबलेन समेतः परां विभूतिं ग्रहः प्रसाधयति ।
विहगस्त्रिकोणबलवान्साचिव्यं बलपतित्वं वा ॥
मित्रबलेन च सहितः प्रमुदितधनधान्यसंपदाक्रान्तम् ।
मित्रबलेन च युक्तो जनयति कीर्त्यान्वितं पुरुषम् ॥
शुभदर्शनबलसहितः पुरुषं कुर्याद्बलान्वितं ख्यातम् ।
विभवप्रधानमखिलं सुरूपदेहं सुसौख्यं च ॥
पुंस्त्रीभवनबलेन च करोति पुरुषं प्रसिद्धं च ।
जनपूजितं सुनीतिं सुवस्त्रभूषान्वितं कुरुते ॥"
क्वचिद्राज्यं क्वचित्पूजां क्वचिद्द्रव्यं क्वचिद्यशः ।
ददाति विहगश्चित्रं चेष्टावीर्यसमन्वितः ॥

वक्रिणश्च महावीर्याः शुभा राज्यप्रदा ग्रहाः।
पापाः प्रवासिनां पुंसां कुर्वन्ति च पदाटनम् ॥"
स्वस्थः समागमकरोद्भवर्विविजयवले विदधाति।
शुभमखिलं विहगेन्द्रो राज्यं च विनिर्जितारातिः ॥
रात्रिदिवाबलपूर्णः भूगजलाभेन शौर्यपरिवृद्ध्या।
मलिनयति शत्रुपक्षं भजति च लक्ष्मीं नभश्चरैः पुरुषः ॥
द्विगुणं द्विगुणं दद्युर्वर्षाधिपमासदिवसहोरेशाः।
क्रमपरिवृद्ध्या सौख्यं स्वदेशसुघनं च कीर्तिं च ॥
पक्षबलाद्रिपुनाशं रत्नाम्बरहस्तिसंपदं दद्युः।
स्त्रीकनकभूमिलाभात्कीर्तिश्च शशाङ्कबलाभाम् ॥
सकलबलैः समुपेताः निर्मलकरजालभासुराः सततम्।
राज्यं ग्रहाः प्रदद्युः सौख्यं च मनोरथातीतम् ॥" इति।

ननु सर्वे ग्रहाः बलवन्तः शुभं कुर्वन्ति चेत्किमर्थं शुभपापविभागः कृतः। इयान्विशेषः कथितः।

"आचारसत्त्वशुभशौर्ययुताः सुरूपा-
स्तेजस्विनः कृतविदो द्विजदेवभक्ताः।
स्रग्वस्त्रगन्धजलभूषणसत्प्रियाश्च
सौम्यग्रहैर्बलयुतैः पुरुषा भवन्ति ॥
लुब्धाः कुकर्मनिरता निजकार्यनिष्ठाः
साधुद्विषः सकलहास्यमनोभिभूताः
क्रूराः सदा वधरता मलिनाः कृतघ्नाः
पापग्रहैर्बलयुतैः पिशुनाः कुरूपाः ॥" इति।

ननु बलसहिता ग्रहाः शुभं कुर्वन्ति दुःखं नाशयन्ति, बलहीनाः विपरीतं कुर्वन्तीति नियमो विद्यते एतत्र प्रयुक्तः। येन ग्रहेण भावास्थानालोकनादिभिः शुभफलमुच्यते स बलवान्सत्फलसम्पन्नश्चेत्तदभाव इत्येव सत्फलदो भवत्येतद्विपरीतमशुभफलेपि नियमस्तथा च सारावल्याम्-

"उत्पातिकाः सपितृकाः समला विरूक्षा
नीचं गता रिपुगृहे च नभश्चरेन्द्राः।
युद्धे जिताः शुभफलानि विनाशयन्ति
पापानि यानि सुतरां परिवर्द्धयन्ति ॥" इति।

बलवशतः फलविभागः क्रियते । इति बलकथनं शास्त्रान्तरादादाय लिखितमस्माभिरस्मिञ्छास्त्रे आपाततो निरूपिते सर्वं सिद्ध्यति । तन्मन्दबुद्धीनां दुरवबोधनम् । इति ।

शरुबुगुशुचराद्या नामाद्यक्षरैर्ग्रहाः अवगन्तव्याः । अधोऽधो वृद्धितः अधिकमधिकं वीर्यवन्तः एतेषां यथोत्तरं बलवृद्धिरित्यर्थः । बहुषु बलाधिकग्रहनिरूपणे प्रयोजनेऽनेन प्रयोजनं न खलु फलनिरूपणे । तथा च कृष्णीये-

"मन्दारसौम्यवाक्पतिसितचन्द्रार्का यथोत्तरं बलिनः ।
नैसर्गिकबलमेतद्बलसाम्येऽस्मादधिकचिन्ता । " इति ।

एवमुक्तं ग्रहाणां बलं शास्त्रान्तरेषु गणितप्रक्रियया निर्णेतुमुपाय उक्तः । तदनेनाचार्येण गुरुमुखात्संसिद्ध्यतीति नोक्तम् । तथाप्यस्मिन् शास्त्रे आपाततो निरूप्यमाणे सूचितमेव इति सिद्ध्यति । शास्त्रान्तरेषु गर्भाधानजन्मकालप्रवेशकालेषु बलवतो लग्नाच्चिन्त्यमित्युपदिष्टम् । अस्मिञ्छास्त्रे त्वाधानजन्मकालावेव निरूपणीयत्वेन विवक्षितौ । चेत्प्रवेशस्य कालस्य दुरधिगमत्वादेवं चैतच्छास्त्रान्तरे कथंचित्प्रवेशकालो निरूपणीय इत्युक्तमेवमिहोच्यते । ज्ञाताभ्यामाधानजन्मकालाभ्यां कथंचित्प्रवेशकालोऽवगन्तव्यः । इति । तथा च यवनेश्वरः-

"मासः पङ्क्तिः समेधित्वा कालात्मा मासि सप्तमे ।
वित्तस्यायव्ययं पुत्रात्कलत्राणि भृतिं तथा ॥
व्याधिं कर्माणि विद्यां च चिदा सह निषिंचति ।
प्रारब्धकर्मवशतः शरीरे गर्भसंस्थिते ॥
एनमालंव्य माता च पिता भ्राता सखा परः ।
जयः पराजयो भाग्यमेवमाद्या भवन्ति हि ॥ "

तथापि दुरवबोध एव इति । जन्माधानकालाभ्यामेवाचार्येण फलनिरूपणमुक्तम् । तस्माज्जन्मकालेनानयनमस्माभिरत्र शिष्यहितायोच्यते । अत्र बलाबलनयने नवांशद्वादशांशकादिपरिज्ञानार्थं जन्मकाले जन्मलग्नस्य नाडीविनाडीप्राणादि सूक्ष्मकालं तत्काले सूर्यादिग्रहाणां स्फुटं सम्यक् कृत्वा दृग्गणिततुल्येन गणितेन सम्यक्कार्यः । तथाच जातकसंग्रहे-

"योगे ग्रहाणां ग्रहणेऽर्कसोमयोर्मौढ्ये तथा चक्रगतौ च पंचसु ।
दृष्टानुरूपं करणं यदन्वहं तेन ग्रहेन्द्रान्गणयेत्त्रिवारकम् ॥ " इति ।

अन्यत्रापि-

"यदा यत्रैव सिद्धान्तो गणितो दृक्समो भवेत् ।
तदा तेनैव संसाध्य जातकं गणयेद्बुधः ॥ इति ।

स्पष्टो ब्राह्मस्तु सिद्धान्तस्तस्यासन्नस्तु रोमशः ।
सौरः स्पष्टतरोऽस्पष्टौ वासिष्ठः पौलिशश्च तौ ॥ " इत्युक्तम् ।

पराशरमुनिनाप्युक्तम्—

"कदाचिद्ब्रह्मसिद्धान्तः सावित्रस्तु कदाचन ।
कदाचिद्रौमशः स्पष्टो न कदाचित्तथेतरौ ॥ " इति आचार्यश्चाह—
"स्पष्टो ब्राह्मः प्रोक्तस्तस्यासन्नस्तु रोमशो ज्ञेयः ।
स्पष्टतरं सावित्रः परिशिष्टौ दुरविभ्रष्टौ ।" इति ।

श्रीपतिरप्याह—

"ज्ञेयोऽत्र प्रथमं हि जन्मसमयश्छायाम्बुयन्त्रैः स्फुटं
तत्कालप्रभवा विलग्नसहिताः कार्यास्ततश्च ग्रहाः ॥
सिद्धान्तोक्तपरिस्फुटोपकरणैस्तैश्चासकृत्कर्मणा
भावाः खेटदृशौ बलानि च ततस्तेषां विचिन्त्यानि षट् ॥" इति ।

तस्मादेव गणितेन सदृक् साम्यं भवति तेन ग्रहाः सम्यक् स्फुटीकर्तव्याः । अन्यथा तु ग्रहाणां वस्तुतःस्थित्यज्ञानात्कथं जातकेन फलनिरूपणं क्रियते मुहूर्तादिष्वपि तथैव कर्तव्यं भवति ।

जन्मकाले सम्यक् स्फुटीकृतास्थितीन्ग्रहान्विज्ञाय बलाबलं गुणयेदनेनाचार्येण चतुष्प्रकारं बलमुक्तम् । कैश्चित् षट्प्रकारमुक्तम् । तथा च पराशरमुनिना—

"निसर्गकालचेष्टाख्यदृगायनदिशाख्यया ।
षट्प्रकारं बलं प्राहुर्ग्रहाणां पूर्वसूरयः ॥" इति ।

निसर्गबलमनेनाचार्येणाप्युक्तम् । अयनबलन्तु चेष्टाबलान्तर्गतत्वात्प्रोक्तम् । अथोच्चबलमानयेत् । 'नीचेऽतोर्द्धं ह्रसति हि ततश्चान्तरस्थेऽनुपातः' इत्याचार्येण दर्शनयने कथितं तत्रापि त्रैराशिकेनोच्चबलमानेतव्यम् । ग्रहस्फुटं विन्यस्य ग्रहाणां स्वस्वपरमनीचभागं विशोधयेदादित्यस्य दशभागाधिकषड्राशयः । चन्द्रस्य त्रिभागसहित सप्तराशयः इत्यादि द्रष्टव्यम् ।

"नीचोनं तु ग्रहं भार्द्धाधिके चक्राद्विशोधयेत् ।
भागीकृत्य त्रिभिर्भक्तं फलमुच्चबलं भवेत् ।
परमोच्चे पूर्णमेकं नीचे शून्यमुदाहृतम् ।" इति ।

परमोच्चे पूर्णमेकं बलं परमनीचे शून्यम् इति । अन्तरेऽनुपातः अशीत्युत्तरशतभागाः स्वोच्चनीचांतरमतो भागात्रितयस्यैको बलषष्ट्यंशो भवति । ततस्त्रिभिर्भज्यते इति । अथ मूलत्रिकोणादिबलमानयेदुत्तरत्र भावफलाध्याये इष्टानिष्टफलयोः स्थानभेदेन फलमानं वक्ष्यति ।

"उच्चत्रिकोणस्वसुहृच्छत्रुनीचगृहार्कगैः ।
शुभसम्पूर्णपादोनदलपादाल्पनिष्फलम् ॥" इति ।

अतः शुभफलानां बलवृद्धिवशाद्वृद्धिः । अशुभफलानां बलह्रासवशाद्वृद्धिरिति सिद्धं भवति । तस्मात्तेनैव पथेन बलममाणमप्युक्तं भवति प्रायशः अत्रोक्तस्थानबलवशात्माप्तबलसंख्यां अन्यशास्त्रादानीय लिख्यते । तथा च पराशरहोरायाम्-

"मूलत्रिकोणस्वर्क्षाधिमित्रामित्रसमारिषु ।
अतिशत्रुगृहे चापि स्थितानां क्रमशो बलम् ॥
भूताब्धयः खरामाश्च नखास्तिथिदिशो युगाः ।
द्वाविंदुशुक्रौ युग्मांशे तिथयोजांशकापरे ॥
केन्द्रादिषु स्थिता लभात्षष्टिं त्रिंशत्तिथिक्रमात् ।
आदिमध्यावसानेषु द्रेष्काणेषु स्थिताः क्रमात् ॥
पुन्नपुंसकयोषाख्या दद्युस्तिथि बलं ग्रहाः ।
स्वषड्वर्गगतास्त्रिंशदेवं स्थानबलं विदुः ॥" इति ।

मूलत्रिकोणस्वर्क्षादिमित्रामित्रक्षेत्रेषु पादोनमर्द्धं त्रिंशत्पादमिति बलं, क्रमादित्याचार्येण 'स्वोच्चसुहृत्स्वदृकाणनवांशैः स्थानबलं स्वगृहोपगतैश्च' इत्युक्तवता बलवत्त्वात्स्वशत्रुअधिशत्रुक्षेत्रेषु बलं नोक्तम् । स्वगृहोपगतैश्च इत्यत्र स्वशब्देनादिमध्यान्तद्रेष्काणेषु पुंनपुंसकस्त्रीग्रहाः उक्ताः । पुरुषग्रहाः आदिद्रेष्काणे, नपुंसकग्रहाः मध्यद्रेष्काणे, स्त्रीग्रहाश्चान्त्यद्रेष्काणे पादबलयुक्ताः । स्त्रीग्रहौ चन्द्रशुक्रौ स्त्रीराश्यंशकस्थौ । शेषा ओजग्रहांशकस्थाश्च पादबलयुक्ताः । इत्येतदपि ग्रहः स्वशब्देन सूचितम् । 'स्वोच्चसुहृत्स्व' इत्यत्र स्वशब्देन स्वषड्वर्गगतानामर्द्धबलम्-

"उदयरविशशांकप्राणिकेंद्रादिसंस्थाः
प्रथमवयसि मध्येन्त्ये च दद्युः फलानि ।"

इत्युक्तस्तत्र वक्ष्यति । तत्र केंद्रादिस्थानां प्रथतोक्ता बलपूर्तिसमान्वितायाश्च सूचिताः । केन्द्रे षष्टिबलसंयुक्ताः । पणफरस्थास्त्रिंशदापोक्लिमस्था स्थिति मित्रबलयुक्ताः । इति । समारिक्षेत्रगतांशषष्ट्यंशबलयुक्तास्तत्र मूलत्रिकोणे षष्ट्यंशचतुष्कबलयुक्ताश्च भवन्ति । अत्र मूलत्रिकोणराशयः 'सिंहो वृष' इत्यादिना पूर्वमुक्ताः । अत्र मूलत्रिकोणस्वर्क्षोच्चानामेकत्वे विभागोऽनेनाचार्येणात्र नोक्तः ।

"सिंहे विंशति राशितो गवि परे सर्वांशकास्तुङ्गतो
मेषे द्वादश पंच योषिति परे तुङ्गा इयाङ्गे दश ।
जूके पंच धटे तु विंशति॰" इत्यादि ।

अत्र केषांचित्पक्षे विशेषोस्ति । तथा च पाराशरहोरायाम्

"मूलत्रिकोणपूर्वार्द्धे रवेर्लेये च शीतगोः ।

भागानां विंशतिः स्वोच्चतृतीयांशपरं स्मृतम् ॥
शिष्टं मूलत्रिकोणं स्याद्वृषजे तद्दलद्वयोः ।
कुजपूर्वभागमोजे च स्वर्क्षमन्यत्रिकोणभम् ॥" इति ।

अत्र पूर्वोक्तपक्षो वरीयानित्यस्माभिः श्रुतम् । अतिमित्र-मित्र-सम-शत्रु अतिशत्रु-स्थानानि पूर्वोक्तानि 'सत्योक्ते सुहृद' इत्यादिना 'अन्योन्यस्य धनव्ययाय' इत्यादिना चैवं जातके शत्रुमित्रोदासीनकल्पना 'जीवो जीवबुधौ' इत्यादिपक्षो मुहूर्तादौ प्रश्ने चाङ्गीकर्तव्यः । एवं प्रथममुच्चबलमानीय पश्चान्मूलत्रिकोणस्वराशाविति: मित्रभे समभे शत्रुभे च पंचचत्वारिंशत्पंचपंचविंशतिपंचदशाष्टौ चत्वारो द्वौ च षष्ट्यंशक्रमेण न्यस्तव्यास्ततः षड्गबलं निरूपयेत ॥ २१ ॥

इति श्रीबृहज्जातके होराशास्त्रे दशाध्यायीटीकायां द्वितीयोऽध्यायः ॥ २ ॥

---

## अथ वियोनिजन्माध्यायः ३.

( वसन्ततिलका )

क्रूरग्रहैः सुबलिभिर्विबलैश्च सौम्यैः
क्लीबे चतुष्टयगते तदवेक्षणाद्वा ।
चन्द्रोपगद्विरसभागसमानरूपं
सत्त्वं वदेद्यदि भवेत्स वियोनिसंज्ञः ॥ १ ॥

अथ वियोनिजन्माध्यायो व्याख्यायते ।

विविधयोनीनां तिर्यक्स्थावरादीनां जन्म तद्वियोनिजन्मा कालात्मा विधातैव व्यञ्जयति। तथा च सारावल्याम्-

"समभिव्यनक्ति देवः स्थावरजङ्गमं यथा लोकम् ।
कालनिमित्ताकारैदेशेन च तत्प्रपञ्चोऽयम् ॥" इति।

अथ क्रूरग्रहैरित्यादि । क्रूरग्रहैर्बलयुतैर्बलहीनैः सौम्यैश्च चन्द्रोपगतद्वादशभागसमानरूपं सत्त्वं प्राणिनं वियोनिजन्मानं वदेत् । स द्वादशांशोऽपि वियोनिश्चेदेव वियोनिजन्म वक्तव्यम् न नरभागेनेत्यर्थः। कीदृशोऽसौ सत्त्वश्चन्द्रो द्वादशांश पतद्भुक्तभवने इत्युक्तत्वात्पृष्टं वा मुष्टिगतं नष्टं वा वदेदित्युक्तं भवति । जन्माधानयोः प्रश्ने चैतदुपयुज्यत इति सिद्धं भवति । तथा च सारावल्याम्-

"आधाने जन्मनि वा प्रश्ने वा द्वादशांशके चंद्रः ।
यस्मिन्नवस्थितस्तस्य लग्नतोपक्रमसमं सत्त्वम् ॥" इति ।

लग्नमित्युत्तरश्लोकगतमत्राप्यादेयमथवा स लग्नराशिर्वियोनिसंज्ञश्चेद्बुधमन्दे केन्द्रगते तदवेक्षणाद्वा तयोर्बुधमन्दयोर्लग्नराशाववेक्षणादिति । लग्नराशेः सिद्धत्वात्स इति । लग्नराशिरप्यभिमेतस्तथा च सारावल्याम्-

"क्रूरैः सुबलसमेतैरितरैर्विबलैर्वियोनिलग्ने ।
सौम्यार्किभ्यां केंद्रे दृष्टे वाभ्यां वियोनिः स्यात् ॥" इति ।

विबलैश्च सौम्यैरित्युक्तत्वादर्थात्सबलैः सौम्यैर्मनुष्यजातयोऽभ्यूह्याः । तथा च कृष्णीये-

"प्रायेण शुभा बलिनो मानुषचिंतां तदाश्रये कुर्यात् ।
देवानामुच्चगतानां त्रयेषु नीचेषु नारकीयाणाम् ॥" इति ।

तदाश्रये मनुष्यराश्याश्रय इत्यर्थः । अथार्थान्तरम् । 'चन्द्रोपगद्विरसभागसमानरूपम्' रसभागषष्ठांशः द्वौ रसभागौ षष्ठांशौ राशेस्त्र्यंश इत्यर्थः । द्रेष्काण इति सिद्धं भवति । तेन समानरूपम् । चन्द्रोपगतद्रेष्काणसमानरूपमुत्तरश्लोके लग्नं च वियोनिसंभवमित्युक्तत्वात्प्रश्नलग्नद्रेष्काणसमानरूपं वा वदेत् । एतच्चौराद्याकृतिभोजनप्रश्ने भोक्तुराकृतिं च वदेत् ।

"यादृग्भवति विलग्ने द्रेष्काणो भवति तादृशश्चौरः ।
केंद्रगतो वा यादृग्ग्रहस्तु तादृग्विनिर्देश्यः ॥" इति ।

अथार्थान्तरम् ।

चन्द्रोपगतद्रेष्काणरूपं सत्त्वं वदेदिति । चौरापहृतद्रव्यांतर्गतद्रव्यं वदेदित्यर्थः । धातुमूलेषु यद्द्रव्यधारी द्रेष्काणस्तद्द्रव्यं नष्टं वा चिन्तितम् । इति तथा च कृष्णीये-

"दण्डामिषयष्टिधराः शाखाफलमूलधारिणश्च तथा ।
द्रेष्काणा धान्यकरा वृक्षसमीपाश्रिताश्चैव ॥" इति ।

'तदवेक्षणाद्वा' इत्यत्राप्यर्थान्तरमस्ति तदिति क्रूरसौम्याविषयस्तुशब्दः क्रूरसौम्यविलक्षणात्तदुक्तधातुमूलजीवनष्टमुष्टिचिन्तायवगन्तव्यम् ।

तथा च कृष्णीये-

"चंद्रारोरगसौरैर्धातुं मूलं किलार्कशुक्राभ्याम् ।
जीवो जीवबुधाभ्यां होराचार्या वदन्त्येवम् ॥
द्विपदचतुष्पदविहगाः संकुलपापाश्च चिन्तिता ज्ञेयाः ।
द्रेष्काणसदृशरूपा ग्रहरूपाद्वा बलं ज्ञात्वा ॥"

'चन्द्रोपगद्विरसभागसमानरूपम्' इत्यत्र चन्द्रोपगद्विरसभागमिति वर. समानशब्दप्रयोगेनैव सोऽर्थः सूचितः । मेषद्वादशांशे द्रेष्काणे वा मेषसामान्यं चतुष्पदमपि वदेदिति । भक्ष्याहृताकाररुतादिभिर्दृष्टश्रुतैः समानत्वमूह्यम् ।

नागरारण्यजलस्थमनुष्यचतुष्पदविहङ्गसरीसृपराशिगृहवशाद्विहय्य वदेदिति सूचितं समागमशब्देन ॥ १ ॥

(वैतालीयम्)

पापा बलिनः स्वभागगाः
पारक्ये विबलाश्च शोभनाः।
लग्नं च वियोनिसंज्ञकं
दृष्ट्वात्रापि वियोनिमादिशेत् ॥ २ ॥

पापानां स्वभागगत्वं सौम्यानां परभागगत्वं च बुधशन्योश्चतुष्टयादिषु तिष्ठत्तादिस्थितत्वं च पूर्वश्लोकादस्य श्लोकस्य विशेषः। 'लग्नं च वियोनिसम्भवम्' इत्यत्र पूर्वश्लोकोक्तचन्द्रद्वादशांशकस्य वियोनिसंज्ञितं लग्नं दृष्ट्वात्रापि वियोनित्वेन न केवलं वियोनित्वं दृष्टम्। गुरुदेवशास्त्रसेवापरिशुद्धबुद्धिर्देशकालावस्थानुरूपं वदेत्। 'लग्नं च वियोनिसंभवम्' इत्यत्र वियोनिलग्नं च वियोनिसंभवं च वियोनेः संभवानां चेति लग्नं दृष्ट्वेति। यथा मेषस्योष्णशाकलघुभोजनं संचारशीलत्वं चिह्नितशिरस्त्वं, जलभीरुत्वं लोके दृश्यते। तथा सर्वराशीनामाकृतिस्वभावानभ्यूह्य वदेत् इति। तथा च सारावल्याम्:

"मेषतदंशे छागादिमसत्वमाहुराचार्याः।
ततो महिषाणां शने रूपाणां तृतीयेंशे ॥
तद्वच्चतुर्थभागे कूर्मादीनां भवेदुदग्जानाम्।
व्याघ्रादीनां परतः परतोंशे वारणादीनाम् ॥
वणिगंशे नररूपं वृश्चिकभागे तथैव भुजगाद्यम्।
नवमे मृगादिर्मीनास्तथा दशमे ज्ञेयाश्च ॥
तत्र च वृक्षा गुल्मास्तृणजातयश्चित्राः।
एकादशे नृवपुर्मत्स्या नानाविधाश्चान्त्ये ॥ २ ॥" इति।

(उपजातिः)

क्रियः शिरो वक्त्रगले वृषोऽन्ये
पादांशकम्पृष्ठमुरोऽथ पार्श्वे।
कुक्षिस्त्वपानांघ्र्यथ मेढ्रमुष्कौ
स्फिक्पुच्छमित्याह चतुष्पदांगे ॥ ३ ॥

मेषः शिरः वक्त्रगले द्वितीयः पादांसकमित्याद्येकैकपादोक्ता मेषादिचतुष्पदां-

गानि । अपानोंघ्रि इत्येकवद्भावः मेढ्रमुष्कौ स्फिक्पुच्छम् इति । तथा च सारावल्याम्–

"मूर्द्धनि मेषो वृषभो मुखगलयोरंशपार्श्वयोर्मिथुनम् ।
पृष्ठे चोरसि कर्को हरिश्च पार्श्वद्वये युवती ॥
तौलिः कुक्षौ कीटश्चापमपानांघ्र्योर्मेढ्रमुष्कयोर्मकरः ।
स्फिचि पुच्छे घटमीनौ राशय एवं चतुष्पदाङ्गेषु ॥" इति ।

कुक्षिस्त्वत्र तु–शब्देनार्थान्तरं सूचितम् । मेषादितुलान्ता दक्षिणभागे स्थिताः, मीनादिवृश्चिकान्ता वामभागे गतास्तथा च सारावल्याम्–

"मेषादयस्तुलान्ता सौम्ये भागे चतुष्पदाङ्गेषु ।
वामे त्वनिमिषघटमृगकार्मुकभवृश्चिकाश्रित्याः ॥"

तु–शब्देनान्यदर्थान्तरमपि सूचितम् । पश्वादीनां सप्तराशिः शिरसि परिकल्प्य चतुष्पदांगेषु शुभाशुभं चिन्त्यम् । अंघ्र्यथेत्यत्राथशब्देन चतुष्पदानामंघ्रिबलं नवमराशिना चिन्त्यम् । मेढ्रमित्युक्तस्थाने चतुष्पदांगानां योनिश्चिन्त्यते ॥३॥

**लग्नांशकाद्ग्रहयोगेक्षणाद्वा**
**वर्णान्वदेद्बलयुक्ताद्वियोनौ ।**
**दृष्ट्या समानां प्रवदेत्स्वसंख्यया**
**रेखां वदेत्स्मरसंस्थैश्च पृष्ठे ॥ ४ ॥**

लग्नाधिकाद्वियोनौ शुक्लादिवर्णान्वदेत् । तथाच सारावल्याम्–

"मेषादिभिरुदयस्थैरंशैर्वा ग्रहयुतैश्च दृष्टैर्वा ।
स्वंस्वं वर्णं भयाद्गात्रे वर्णं व्रणं चापि ॥" इति ।

रक्तः श्वेतः इत्यादिना राशिवर्णः । रक्तश्याम इत्यादिग्रहवर्णः । अथवा लग्नांशनवांशद्वादशांशाद्वर्णान्वदेज्जातिभेदाद्वदेत् । तथा घोराणां बिलवासिनामुच्यते । वृश्चिकनवमांशे वृश्चिकद्वादशांशे च लग्नस्थे वल्मीकादिवासिनां जन्म वक्तव्यम् । एवमन्येषां राशीनां स्वस्वस्थानजातानां सत्वानां स्वसदृशानां च जन्म वक्तव्यम् । तथाच सारावल्याम्–

"वृश्चिकभवने लग्ने तन्नवभागेऽथवा द्विरसंज्ञे ।
बिलवासिनां प्रसूतिं घोराणां निर्दिशेत्तत्र ॥
गोधानां सर्पाणां लोमशानां शल्यकानां च ।
मूषिकबिलेशयानां राजिमतां चैव कीटानाम् ॥

तूलानां नकुलानां वृश्चिकपङ्क्तिदुजालवृकाणां च।
अविषाणां सर्पाणां संग्रामनिवासिनां चैव॥
मृगमकरे लग्नस्थे तन्नवभागेऽथवापि सूर्यांशे।
आरण्यानां सूतिं सत्त्वानां निर्दिशेत्क्रमशः॥
नागानां खड्गानां पृकसंभववराहाणां च।
ऋक्षोग्रशृगालानां भवेन्नृशंसानां सूतिः॥
मीने मीनशि वा सन्ने सूर्यांशकेऽपि वा लग्ने।
गुरुदृष्टेऽपि ज्ञेया बहूदकोत्थास्तथा सत्त्वाः॥
मेषे मेषांशके वा भौमेन निरीक्षिते सदा जातिः।
वृषभे च वदेत्तद्वद्गोमहिषाद्याः सदा भृगुणा॥
स्वंस्वं पूर्वविलग्नं स्वैःस्वैर्दृष्टेपि वा भवति।
स्वभवनसदृशान्सत्त्वान्प्रवदेदविशंकितं तत्र॥
ग्राम्यग्रहेषु नवांशाः पंचदशमाष्टराशिसंयुक्ताः।
आरण्यानां सूतिं ग्राम्येषु विनिश्चितां कुर्युः॥" इति।

एवं स्वपतिदृष्टा राशयः स्वसदृशत्वं कुर्वन्ति। लग्नांशात्स्वपतिग्रहदृष्टा वियोनी वर्णान्वदेत्। लग्नांशकाद्ग्रहयोगेक्षणाद्वा इत्युक्तग्रहफलस्यान्वये कल्पितोऽर्थः कथं बहुषु सत्त्वेषु विकल्पितेष्वेको निर्द्धार्यते, उच्यते-नामांनिरूपणात्कथं नामानिरूपणमिति चेत्तदप्यनेनैव कल्प्यते। लग्नांशकाद्ग्रहयोगेक्षणाद्वा वर्णान्वदेन्नामाक्षराणि वदेद्लग्नवशेन राश्यक्षराणि शास्त्रान्तरोक्तानि-

"आद्यद्रामामिथुनामिवर्णकान्पञ्च वर्णा यचतुष्टयं च।
क्रमेण मेषादिषु योजनीयाः शेषस्तु षष्ठे भगणागमज्ञैः॥"

एतदन्यथा चोक्तम्-

"त्रिंशत्तद्रामिला वर्णा मीनाजाद्युत्क्रमोत्क्रमात्।
कन्यासिंहान्तिके भेशे चतुर्विंशद्यथाक्रमम्॥
तुलादि षट्कं पुनरपि द्विवारं योजयेद्बुधः।
षड्विंशतिप्रमाणेषु वर्गसंस्थितिरीदृशी॥"

इति राश्यक्षराणि द्विविधान्युक्तानि।

अथ ग्रहक्षाणि-

"आ ई उ ए ओ भूता वर्णाः सप्तवर्गाश्च सस्वराः।
क्रमादर्कारशुक्रज्ञजीवार्केन्दूरगात्मकाः॥" इति।

यो ग्रहो लग्नं पश्यति तत्र स्थितो हि तद्वर्गादिरिष्टमुष्टिचिन्तादिषु नामाद्यक्षरमूह्यम्। राशिवशान्नामाक्षरसंख्या-

"व्यक्षरं तु चरे राशौ स्थिरे तु चतुरक्षम् ।
उभये वर्णत्रयं विद्यान्नामभेदसमन्वितम् ॥" इति ।

अन्ये श्लोकस्यापरार्धस्यार्थ उच्यते-

दृष्ट्या समानामित्यादि यावन्तो ग्रहा बलं लग्नं पश्यंति तावन्तो वियोनिलग्नगतान् वदेदिति । यत्र यत्र संख्याकरणमिष्यते तत्र तत्र संख्यामनेन वदेदिति । नष्टद्रव्यसंख्या वा लाभद्रव्यसंख्या वा सर्वसंख्या पुत्रसंख्या वाप्यनेन वक्तव्या ।

यावद्भिः किरणैर्ग्रहो लग्नं पश्यति तावतीं संख्यां वदेदिति । नष्टमुष्ट्यादिद्रव्यसंख्या तु यावन्तो ग्रहाः पुत्रराशिं पश्यन्ति तावन्तः पुत्रान्वदेदिति । तथा चोक्तम्-

"यावन्तो वीक्षन्ते पुत्रगृहं पुत्रकास्तु तावन्तः ।" इति ।

रेखां वदेत्स्मरसंस्थैश्च पृष्ठे'सप्तमस्थैश्च पृष्ठे। सप्तमस्थैर्ग्रहैर्वियोनौ पृष्ठे रेखां वदेत्॥४॥

( वंशस्थम् )

खगे दृकाणे बलसंयुतेन वा
ग्रहेण युक्ते चरभांशकोदये ।
बुधांशके वा विहगाः स्थलांबुजाः
शनैश्चरेन्द्वीक्षणयोगसंभवाः ॥ ५ ॥

तथा च सारावल्याम्-

"विहगोदितद्रेष्काणे ग्रहेण बलिना युते चरभांशे ।
विहगाः स्थलांबुजाः स्युः शनिशशिनोरीक्षणात्क्रमशः ॥
लग्ने जलजे वन्धौ पक्षिखगैरीक्षितेऽपि वा जलजाः ।
स्थलजेषु ग्रहदृष्टे ग्रहवर्णसंस्थलभवाः ॥" इति ।

पुनरपि तत्रैव विशेष उक्तः । तथाहि-

"स्थलजलराशिखगेषु नागरभवनांशकेषु लग्नसंस्थेषु ।
स्थलजलचरसत्त्वानामुत्पत्तिं भवनदृकाणकैर्नूनम् ॥
उदपति वणिग्विलग्ने तद्रेष्काणे सितेन संदृष्टे ।
शुकशारिकान्यपशवश्चकोरभासाश्च जायन्ते ॥
सिंहोदये तदंशे रविणा च निरीक्षिते सूतिः ।
कुक्कुटमयूरतित्तिरपारावतवञ्चुलादीनाम् ॥
पौरग्रहसंयुक्तैर्दृष्टैर्वा ग्रामनगरखेटानाम् ।
प्रासादगृहगतानामुत्पत्तिः पूर्ववज्ज्ञेया ॥" इति ।

एतत्सर्वं बलयुतग्रहेणेति कथनेनावगन्तव्यम् ।

अत्र बुधशनिचन्द्राणां पाक्षित्वमपि सूचितम् । व्याधिप्रश्ने खगे द्रकाणे खगते दशमगते राशौ बलवत्पक्षिग्रहयोगे पक्षिग्रहपीडा व्याधिरित्यादूह्यम् ॥ ५ ॥

( वसन्ततिलका )

होरेन्दसूरिरविभिर्विबलैस्तरूणां
तोयस्थले तरुभवोंशकृतः प्रभेदः ।
लग्नाद्ग्रहः स्थलजलर्क्षपतिस्तुयावां-
स्तावन्त एव तरवः स्थलतोयजाताः ॥ ६ ॥

होरेति होरेन्द्वादिभिर्बलरहितैः खगैः मूलयोनिरुच्यते एवमन्वयः । विबले होरेन्दुसूरिरविभिस्तरूणां सम्भवो भवति । पूर्वश्लोकगतसंभवशब्दोऽत्राध्याहर्तव्यः ।'तोयस्थले तरुभवोंऽशकृतः प्रभेदः' अंशेन स्थलजलचारिणः-प्रभेदः । यस्य तरुभवस्य तरुजन्मनः इति । तथा च सारावल्याम्-

"लग्नार्कसूरिचन्द्रैरबलैः शेषैश्च मूलयोनिः स्यात् ।
स्थलजलभवनविभागो वृक्षादीनां प्रभेदकरः ॥"

अत्र शेषश्चेति सर्वैश्च बलहीनैर्मूलयोनिरिति । तदाचार्येण नोक्तम् ।

होरेन्दुसूरिरवीणामेवं सर्वत्र प्राधान्येन कार्य्यकरत्वमिति होरेन्दुसूरिरवयो विबलाश्चेज्जाताः पुरुषास्तरुवदात्मप्रभावहीना पराधीना भवन्तीति सूचितम् । तदुक्तोऽत्र वक्ष्यति च ।

"राश्यंशपौष्णकरशीतकरामरेज्यै-
र्नीचारिपांशकगतैररिभागगैर्वा ।
येभ्योल्पमध्यबहुभिः क्रमशः प्रसूतौ
ज्ञेयाः स्युरभ्युपगमक्रयगर्भदासाः ॥" इति ।

लग्नाद्ग्रह इत्यादि अनेन सर्वत्र संख्याकरणे विनियोगः । तथा चोक्तम्-

"लग्नाद्यावति भे पापस्तावत्यब्देऽह्नि मासि वा ।
पक्षे क्षणेऽयने वर्ता लग्नेशस्योचितेऽथवा ॥" इति ।

तथा चोक्तमन्यत्र-

"उदयर्क्षाच्चन्द्रर्क्षं भवति तु यावद्दिनैस्तु तावद्भिः ।
आगमनं स्याच्छत्रोर्मध्ये यदि न ग्रहः कश्चित् ॥ ६ ॥" इति ।

( मंदाक्रांता )

अंतस्साराञ्जनयति रविर्दुर्भगान्सूर्यसूनुः
क्षीरोपेतांस्तुहिनकिरणः कंटकाढ्यांश्च भौमः ।

वागीशज्ञौ सफलविफलान्पुष्पवृक्षांश्च शुक्रः
स्निग्धानिंदः कटुकविटपान्भूमिपुत्रश्च भूयः ॥ ७ ॥

अन्तःसारानिति। रविः अन्तःसारानन्तर्गतसाराँश्चन्दनादीन् जलजान्नारिकेलादींश्च निष्पत्रांश्च जनयति। सूर्यसूनुर्दुर्भगान् प्रियंगुविषवृक्षादीन् भोज्यान् जनयति। तुहिनकिरणः क्षीरोपेतान् क्षीरेणोपेतान् जलेनोपेतान् जलजान् हृद्यान् स्निग्धांश्च भक्षणानि च। भौमः कण्टकाढ्यान् तालवेण्वादिकटुकविटपान् मरिचसर्षपाद्यान् सालभूरुहान् चूतपनसाद्यांश्च जनयति। वागीशज्ञौ सफलविफलान् जनयतः। विफलमिति कन्दसूरणे पत्रवल्लिप्रधानान् वृक्षान् जनयति। बुधो वागीशः सफलवृक्षं जनयति। स्थलजलत्वात्स्थलाम्बुजान फलप्रधानान् पनसादीन् जनयति। हेमाश्वाम्बरचय इत्यत्राम्बरफलदत्वाद्वस्त्राणि जनयति। पुष्पवृक्षांश्च शुक्रः पुष्पप्रधानान् चकारात् फलपत्राधिकांश्च स्नेहवतो वृक्षान् जनयति। एतन्नष्टमुष्टिचिन्तासूपयुज्यते भोजनप्रश्ने च ॥ ७ ॥

( वंशस्थम् )

शुभोशुभर्क्षे रुचिरं कुभूमिजं
करोति वृक्षं विपरीतमन्यथा।
परांशके यावति विच्युतः स्वकात्
भवन्ति तुल्यास्तरवस्तथाविधाः ॥ ८ ॥

इति श्रीवराहमिहिराचार्यकृते बृहज्जातके वियोनि-
जन्माध्यायस्तृतीयः ॥ ३ ॥

शुभोशुभक्ष इति। अत्र राशेराधारत्वाद्देशस्याशुभत्वं ग्रहस्याधेयस्य शुभत्वाद्वृक्षस्याधेयस्य शुभत्वम्। अन्यथा विपरीतम्। सर्वत्राधाराधेययोर्गुणदोषनिरूपणं राशिग्रहाभ्यां कर्तव्यमित्युक्तं भवति। कार्याधिपः स्वयं शुभश्चेदशुभराशौ कुगृहजातानि शुभकार्याणि भवन्ति विपरीते विपरीतं लग्नाधिपेन स्ववासभूमिरप्यूह्या। लग्नाधिपः शुभराशौ स्थितश्चेद्दृक्ष्नसोऽपि यद्देशे रुचिः स्ववासोप्यूह्यः। शुभाशुभग्रहदृष्टियोगवशादपि चिन्तनीयम्। चरराशौ चरांशके स्थितश्चेत्संचारशीलः विपरीते विपरीतम्। स्थलराशौ स्थितश्चेत्प्रकाशदेशे स्थितिः। जलराशौ स्थितश्चेद्गूढदेशे स्थितिः। एवं घनस्थानप्रदेशोपि निरूपणीयः इति। परांशक इत्यादि तदंशपर्यन्तं गणिते या संख्या सम्पद्यते सा संख्या हि तरूणां लग्नांशकार्यांशकानां स्थलजलत्ववशात्तरूणां स्थलतोयजातत्वम्। तरुशब्दोऽत्र पदार्थवाचकः कालप्रमाणनिर्णये लग्नांशकाधिरतेष्पनादिकालेषु यः कालः उक्तः स एभिरंशकैर्गुणनीयस्तावानप्यनादिकालः

कार्यसिद्धाविति संख्याकरणे तु राशेर्बलाधिक्ये लग्नाद्ग्रह इति पूर्वोक्तो विधिरंशस्य बलाधिक्येऽयं विधिः लग्नाद्ग्रहः स्थलजलर्क्षपतिस्तु यावानिति पूर्वोक्तविधौ लग्नालङ्ग्नोदितनक्षत्रादारभ्य फलकारको ग्रहो यस्मिन्नक्षत्रे स्थितस्तन्नक्षत्रपर्यन्तं गणितैर्यावद्भिः संख्या तावद्भिर्दिनैर्मासैः संवत्सरैर्वा चरादिराशिवशात्कल्पितैः फलसिद्धिः तथा चोक्तं षट्पञ्चाशिकायाम्–

"ग्रहः सर्वोक्तबलो लग्नाद्यस्मिन् गृहे स्थितः।
सौरैस्तत्तुल्यसंख्यातैर्निर्दिशेद्यातुरादिशेत्॥" इति।

अथवा वृक्षपतिश्चन्द्रो लग्नाद्यस्मिन्नक्षत्रे स्थितश्चन्द्रस्तावद्भिरागमनं स्याच्छत्रोर्यदि मध्ये न ग्रहः कश्चिदिति। पुनरप्युक्तं कृष्णीये–

"लग्नाचन्द्रो यतिमे ततिमे दिवसे भवेद्रोगः।
सौम्याः पश्यन्तीन्दुं यतिमे ततिमे सुखी दिवसे॥" इति।

लग्नाल्लग्नगतनक्षत्राद्राशौ राशिगतनक्षत्र इत्युपदेशः। शुभोशुभर्क्षे रुचिरं कुभूमिजं इत्यत्र रुचिरं श्रद्धेयं दर्शनेन स्वादुग्राह्यमन्नमित्यर्थः। शुभर्क्षे रुचिरं श्रद्धाकरं पथ्यमित्यर्थः। तथा च कृष्णीये–

"क्रूरक्षेत्रे क्रूरैर्दृष्टे जनपानलेपनायोग्यः।
सौम्यक्षेत्रे सौम्यैर्दृष्टे लाभश्च भोज्याश्च॥"

अन्तःसारानित्यादिश्लोकेऽपि पुष्पवृक्षांश्च शुक्रः इत्यत्र शुभवृक्षान्। भौमस्य विटपप्राधान्यादपेरन्तःसारान् गिरिद्रुमान् चन्द्रस्य स्निग्धान् कन्दल्यादीन्। गुरोः सफलान् क्रमुकादीन् शनेर्दुर्भगान् तालादीन् बुधस्य फलोत्पत्तौ नश्वरान् वेण्वादींश्च कथयेदिति। एतत्कृष्णीयेऽप्युक्तम्–

"शुभतरुविटपगिरिद्रुमकदलीक्रमुकादितालवेणूनाम्।
शुक्रमहीसुतरविशशिगुरुपमसौरेवनानि स्युः॥" इति।

इत्याद्यस्मिन्नध्यायेऽर्थो विज्ञेयः। तथाचार्यः स्वयमपि कथयितुं शक्नोति न केचिदर्था मया विदिता तेऽत्र लिखिताः।

इति श्रीवराहमिहिराचार्यकृतबृहज्जातकदशाध्यायीटीकायां वियोनिजन्माध्यायः समाप्तः॥ ३॥

---

(वंशस्थम्)

## अथ निषेकाध्यायः ४.

कुजेन्दुहेतुः प्रतिमासमार्तवं
गते तु पीडर्क्षमनुष्णदीधितौ।
अतोन्यथास्थे शुभपुंग्रहेक्षिते
नरेण संयोगमुपैति कामिनी॥ १॥

अथ निषेकाध्याय उच्यते ।

कुजेति । कुजेन्दू हेतू यस्य तत्कुजेन्दुहेतु । आर्तवकारणं च तत्सफलं च (कुजेन्दुशब्देनोच्यते ) कुजेन्दू । कुजशब्देन पित्तमुच्यते, इन्दुशब्देन शोणितमुच्यते पित्तेन शोणिते क्षुभिते स्त्रीणामार्तवं स्यात् । तथा च सारावल्याम्-

"इन्दुर्जलं कुजोऽग्निर्जलमसृगथवाग्निरेव पित्तं स्यात् ।
एवं रक्ते क्षुभिते पित्तेन रजः प्रवर्तते स्त्रीषु ॥" इति ।

पित्तशोणितप्रकृत्योश्चन्द्रकुजयोः सम्बन्धे सति तद्विकृतस्यार्तवस्य साफल्यमित्यर्थः । ग्रहाणामन्योन्यसम्बन्धेषु दृष्टिरेव प्राधान्येनोच्यते यस्मिन् राशौ ग्रहो वा ग्रहस्य दृष्टिर्भवति । तत्र स्वशक्तिसंपातो भवति । 'अशुभगदिता योगाः याप्या भवन्ति शुभेक्षिताः' ( अ. ४ श्लो. २० ) । इत्येकत्र 'दृष्टस्तु शुभैर्न यदा' ( अ. ६ श्लो. ३ ) इत्यन्यत्र 'यदि नच शुभैर्वीक्षितः शक्तिभृद्भिः' ( अ. ६ श्लो. ७ ) इत्यपरत्र च वक्ष्यमाणत्वाद्दृष्टेः प्राधान्यमतिसिद्धयति । ननु संयोगादपि दृष्टेः प्राधान्यं विद्यते । तथा च वक्ष्यति-

"जनयति नृपमेकोऽप्युच्चगो मित्रदृष्टः ।
प्रचुरधनसमेतं मित्रयोगाच्च सिद्धम् ॥" इति ।

तस्माच्छोणितस्वरूपे चन्द्रे पित्तस्वरूपे कुजेन दृष्टे कुजकार्यपित्तेन चन्द्रकार्यशोणिते क्षुभिते यदार्तवं तदेव फलकारणं भवति । पुनरेतत्किं सर्वदा नहि अनुष्णदीधितौ स्त्रियाः पीडर्क्षमनुपचयराशिगते जातं रजो हि सफलं भवति गर्भनिमित्तं भवतीत्यर्थः । तथा चोक्तम्-

"शीतज्योतिषि योषितोऽनुपचयस्थाने कुजेनेक्षिते ।
जातं गर्भफलप्रदं खलु रजः स्यादन्यथा निष्फलम् ॥" इति ।

शोणितस्वरूपे चन्द्रे स्त्रीणामुपचयराशिगते शोणितप्राचुर्याद्गर्भाशयो न शुद्धयति । तस्मिन् पतितं रेतः शिथिलं भवति गर्भाशये न सज्जते इति । चन्द्रस्य पीडर्क्षगतत्वमवश्यमपेक्षणीयम् । अतोऽन्यथास्थे पुरुषस्योपचयगतेऽनुष्णदीधितौ शुभपुंग्रहेक्षिते शुभपुंग्रहो गुरुरुच्चादिगतो भानुर्वा ओजराश्यादिस्थितो बली बुधो वा तेष्वेकेनेक्षिते कामिनी नरेण संयोगमुपैति । ततो गर्भो भवतीत्यर्थः । कामिनीशब्देन बालवृद्धादिनिषेधः कृतः अथवा कामिनी कामवती । तथा च वाग्भटः-

"क्षामप्रसन्नवदनां स्फुरच्छ्रोणिपयोधराम् ।
स्रस्ताक्षिकुक्षिपुंस्कामां विद्यादृतुमतीं स्त्रियम् ॥"

अथार्थान्तरमुच्यते । विवाहसिद्धिर्भविष्यति नवेति प्रश्ने कृते 'अतोऽन्यथास्थे इत्यादिना निर्णय उच्यते । अतः पूर्वोक्तादन्यथास्थेऽपीडर्क्षे गते गोचरफले जन्मराशेरारभ्य यस्मिन् राशौ चन्द्रः पीडां करोति तत्पीडर्क्षम् । तदुक्तं रत्नमालायाम्-

"शून्यजन्मरिपुलाभखत्रिगश्चन्द्रमाः शुभफलप्रद उक्तः।"

उक्तस्थानेभ्योऽन्यानि पीडर्क्षाणि। प्रश्नादपीडर्क्षे चन्द्रे शुभपुंग्रहैर्गुरुरविसौम्यैर्दृष्टे विवाहो भविष्यति। तथाच षट्पञ्चाशिकायाम्–

"गुरुरविसौम्यैर्दृष्टः स्त्रीसुतमदायारिगः शशी लग्नात्।
भवति हु विवाहकर्ता त्रिकोणकेन्द्राश्रितैः सौम्यैः।"

कुजेन्द्वित्यादिना विवाहविघ्ना उच्यन्ते। कुजेदृष्टिद्योगादार्तवं रजस्वलात्वाद ग्राह्यत्वम्, चन्द्रे च पीडर्क्षे गते दुर्लभत्वमित्यादि सूचितम्। अत्रापि स्त्रीसंयोगप्रश्नेऽपमेव विधिः कामिनी नरेण संयोगमुपैति इत्युक्तत्वात्॥ १॥

(उपेन्द्रवज्रा)

यथास्तराशिर्मिथुनं समेति
तथैव वाच्यो मिथुनप्रयोगः।
असद्ग्रहालोकितसंयुतेऽस्ते
सरोपदृष्टैः सविलाससहासः॥ २॥

यथेति–यथा येन प्रकारेणास्तराशिर्मिथुनं समेति। मिथुनकर्म करोति इत्यर्थः। मिथुनप्रयोगस्तथैव वाच्यः। द्विपदचतुष्पदकीटानां यो राशिः सप्तमराशिस्तस्य मिथुनप्रयोगवदत्रापि वदेदिति। तथा च सारावल्याम्।

"द्विपदादयो विलग्नात्सुरतं कुर्वन्ति सप्तमे यद्वत्।
पुरुषाणामपि तद्वद्गर्भाधाने समादेश्यम्॥"

किंतु सप्तमे मेषे सति कामित्वं वनिताप्रियत्वम् वृषे तु सौभाग्यत्वम् प्रमदाप्रियत्वम्, मिथुने तु सुरतोपचारकुशलत्वम्, कुलीरे हि स्त्रीजितत्वम्, सिंहे स्त्रीद्वेषित्वम् कन्यायां सुरतप्रियत्वम्, तुलायां स्त्रीजितत्वम्, वृश्चिके स्त्रीहीनत्वम्, चापे पुरुषप्रधानत्वम्, मकरकुम्भयोरसुखावहं सुरतम्, मीने स्त्रीजितत्वमित्यादि चिन्त्यम्। अस्तराशावोजे मिथुनप्रयोगेऽप्योजसंख्या। युग्मे युग्मसंख्या। तथा च कृष्णीये–

"त्रिषमेषु ग्रहराशिषु मैथुनमेकं द्विवारमितरेषु।
बहुशो विक्रमबहुलं भृगुकुजवर्गात्मकं सुरतम्॥" इति।

अस्तराशिः पुरुषश्चेत्पुरुषकर्तृकम्, वनिता चेत्स्त्रीकर्तृकम् पुरुषराशौ स्त्रीग्रहदृष्टे युक्ते चोभयकर्तृको मिथुनप्रयोगः अधिपतिवशादुक्तग्रहवशाद्वा वर्णाश्चिन्त्याः। तस्योच्चादिस्थितिवशात् पुरुषस्य वनितायाश्चोत्कर्षादि चिन्त्यम्। तद्ग्रहवशादाकृतिस्वभावादयश्चिन्त्याः। 'स्नेहः शशाङ्कात्' (५।१८) इत्यादिना दीपाश्चिन्त्यः।'जीर्णं संस्कृत' (५।१९) इत्यादिना गृहविशेषाश्चिन्त्याः। 'शय्यास्वपि' (अ: ५। श्लो० २१) इत्यादिना खट्वाङ्गलक्षणं चिन्त्यम्। 'वस्त्रं स्थूल' (अ. २। श्लो. १२) इत्या

'अन्योऽन्यं यदि पश्यतः शशिरवी' ( अ. ४ श्लो. १२ ) इत्यादिश्लोकेन क्लीवयोगान् वक्ष्यति तेषु जाता विबीजिन इति केचित् ॥ ३ ॥

( वंशस्थम् )

दिवाकरेन्द्वोः स्मरगौ कुजार्कजौ
गदप्रदौ पुङ्गलयोषितोस्तदा ।
व्ययस्वगौ मृत्युकरौ युतौ तथा
तदेकदृष्ट्या मरणाय कल्पितौ ॥ ४ ॥

दिवाकरेन्द्वोरिति । दिवाकरः पिता, इन्दुर्माता । तथा चोक्तम्-

"भानुः पिता च जन्तूनां चन्द्रो माता तथैव च ।
तयोर्बलाबलं ज्ञात्वा पितृमातृगुणान्वदेत् ॥"

अनेन श्लोकेनोक्तं क्लेशमरणम् । चतुरस्रगतैः पापैश्चिन्त्यम् । 'उग्रग्रहैः सित चतुरस्रसंस्थितैः' इत्यादिना सिद्ध्यति । दिवाकरेन्द्वोरित्याद्युक्तलक्षणेन प्रश्नादौ प्रच्छकसम्बन्धिनां स्त्रीपुरुषाणां रोगादि वा वाच्यम् ॥ ४ ॥

( वंशस्थम् )

दिवार्कशुक्रौ पितृमातृसंज्ञकौ
शनैश्चरेन्दू निशि तद्विपर्ययात् ।
पितृव्यमातृष्वसृसंज्ञितौ च ता-
वथौजयुग्मर्क्षगतौ तयोः शुभौ ॥ ५ ॥

रात्रौ च पितृमातृग्रहकल्पनायां किंचिद्विशेषमाह-दिवार्कशुक्राविति । दिवार्कशुक्रौ पितृमातृसंज्ञितौ, शनैश्चरेन्दू पितृव्यमातृष्वसारौ । निशि शनैश्चरेन्दू पितृमातरौ दिवाकरेन्दू पितृव्यमातृष्वसारौ । 'दिवाकरेन्द्वोः' ( अ. ४ श्लो. २ ) इत्युक्तलक्षणमत्रापि चिन्त्यम् । अत्रायं विशेषोऽभ्यूह्यः । दिवा शुक्रस्य मातृकारकत्वात्कलत्रकारकत्वं न्यूनम् । तदा सप्तमाधिपस्यैव कलत्रकारकत्वम् । रात्रौ शनेः पितृकारकत्वात्प्रेष्यकारकत्वं दुर्बलम् । तदा षष्ठाधिपस्यैव प्रेष्यकारकत्वम् । अनेन श्लोकेन दिवानिशोः पितृमातृकारकत्वविशेषे विहितेपि दिवाकरेन्द्वोः पितृमातृकारकत्वं सम्प्रदर्शितं । तथाच सारावल्याम्-

"क्षीणे शशिनि स पापे माता म्रियते पिता रवौ तद्वत् ।
बलिभिर्दृष्टे मिश्रैर्व्याधिः सौम्यैः शुभं भवति ॥"

"विपुलविमलमूर्तिः स्वोच्चगो वा स्वराशौ
गुरुसुतयुत इन्दुर्बोधनेनानुदृष्टः।
अतिशयसुखदाता पञ्चमे वापि मातुः
पितुरपि खलु तद्वद्भास्करः सर्वदैव ॥" इति।

अत्रापि दिवार्कशुक्रावित्यादिना विहितपितृमातृकारकत्वेन प्रमाणं चेद्दिवाकरेन्द्वोरित्यादिश्लोकस्य वैयर्थ्यं भवति। तस्मादस्मिन्ग्रन्थेऽपि तदा पितृमातृकारकत्वमर्केन्द्वोरस्तीत्युक्तमेव। ननु दिवाकरेन्द्वोरित्यादिनापि साक्षात्पितृमातृकारकत्वं विधीयते चेत्किमर्थं पुंगलयोपितोरिति कथितम्। पुंगलयोपितोरित्युक्तेन पितृमात्रोरिति नावगम्यते। चेत्पुंगलयोपितोरित्युक्तस्य श्लोकस्य कोऽर्थः। आधानादारभ्य प्रसवावधि दिवाकरेन्दुभ्यां पुंगलयोपितोर्गुणदोषचिन्तनम्। पुनर्जन्मनः प्रभृति दिवार्कशुक्रावित्यादिनेत्यपि योजनमेव युज्यते। 'निगदितमिह चिन्त्यं सूतिकालेऽपि युक्त्या' (अ. ४ श्लो. २२) इति वक्ष्यमाणत्वात्। 'पापैश्चन्द्रात्स्मरसुखगतैः' (अ. ५ श्लो० १७) इत्यनेन। 'क्रूरर्क्षगतावशोभनौ' (अ. ५ श्लो. ७) इत्यादिना चाधानादारभ्य प्रसवावधेः पितृमातृत्वं, न घटतेत्येतद्दुर्बलमेव। पितृमातृग्रहौ जन्मकाले यस्य नवांशके वर्तेते तद्दशायां पितृमातृमृतिः। 'क्रूरेऽष्टमे विधवता निधनेश्वरांशे यस्य स्थितौ वयसि तस्य समे प्रदिष्टा' (अ. २२ श्लो. १४) इति वक्ष्यमाणवशादेतत्सिद्ध्यति। तथा चोक्तम्—

"सूर्यो यस्य नवांशे स्यात्तद्दशायां पितृक्षयः।
चन्द्रेण मातृनाशः स्यादथ युक्तग्रहेण वा ॥" इति।

प्रमाणवशादेतत्सूर्यचन्द्रसमारूढनवांशद्वादशांशकगते चन्द्रे मृतिं विद्यात्। पितृमात्रोर्यथाक्रमसिद्धमित्याद्युक्तलक्षणानि आपाततोऽस्मिञ्शास्त्रे विमृष्टे सिद्ध्यति। पुनरर्थान्तरमप्यत्रोह्यम्। शुभग्रहयोश्चन्द्रशुक्रयोर्मातृकारकत्वम्। पापग्रहयोरर्कमन्दयोः पितृकारकत्वमप्युक्तम्। तेन शुभाः गुरुशुक्रबुधाः मातृपक्षाः पापौ कुजमन्दौ पितृपक्षौ एतत्प्रश्नादौ सम्बन्धिबन्धुनिरूपणेपूपयुज्यते। तथा च कृष्णीये—

"पितृपक्षौ भौमयमौ मातृपक्षा बुधोशनोऽङ्गिरसः।
पुंग्रहराश्योर्विषमा स्त्रीग्रहराश्योः समाः संख्याः ॥ ५ ॥" इति।

(द्रुतपदम्)

आभिलपद्भिरुदयर्क्षमसद्भि-
र्मरणमेति *भग्निमयाते।

उदयराशिसहिते च यमे स्त्री
विगलितोडुपतिभूसुतदृष्टे ॥ ६ ॥

अभिलषद्भिरिति । अर्थान्तरम् । उदयर्क्षमभिलषद्भिरुदयर्क्षनिरतैरित्यर्थः । शुभदृष्टिमयाते उदयर्क्षे इत्यर्थः । शुभदृष्टिमयाते इत्युक्ते सति अपरार्द्धोक्ते योगे 'उदयराशिसहिते च यमे' इत्यत्र 'शुभदृष्टिमयाते' इति विशेषणं नान्वेति । 'शुभदृष्टिमयाते' इत्येवमुक्तस्य पूर्वार्द्धगतत्वात् पूर्वार्द्धोक्तयोगेऽर्थबलादुदयर्क्षविशेषणत्वं स्यात् । तथाच सारावल्याम्-

"उदयं यातैः पापैः सौम्यैरनवेक्षितैर्मरणमस्याः ॥" इति ।

इत्यपरार्द्धेऽर्थान्तरम् । उदयराशिसहिते यमे शुभदृष्टिमयाते अप्राप्ते विगलितोडुपतिभूसुतदृष्टौ सत्यां स्त्री मरणमेति । भूसुतदृष्टे इति भावोक्तः । एष योगोऽपि सारावल्यामुक्तः-'उदयस्थितेऽर्कपुत्रे क्षीणेन्दौ भौमसंदृष्टे ।' इति-अर्थान्तरम्-उदयर्क्षमभिलषद्भिर्निमित्तैरुपश्रुतिशकुनादिभिः स्त्री मरणमेति । शुभदृष्टिमयाते शुभशकुनदर्शनमप्राप्ते उदयराशिसहिते च यमे गुलिकशन्यादिप्रेतग्रहे । अथवा यमशब्देन मरणसूचकानि निमित्तानि सूचितानि । 'विगलितोडुपतिभूसुतदृष्टे' मनोदृग्भ्यां दुर्निमित्ते दृष्टे सतीत्यर्थः । एवं सर्वत्रास्तीति बोद्धव्यम् ॥ ६ ॥

( वैतालीयम् )

पापद्वयमध्यसंस्थितौ
लग्नेन्दू न च सौम्यवीक्षितौ ।
युगपत्पृथगेव वा वदे-
न्नारी गर्भयुता विपद्यते ॥ ७ ॥

पापद्वयमध्यसंस्थिताविति । लग्नचन्द्रयोरुभयोः पापद्वयमध्यसंस्थितयोः संवादित्वं विद्यते । 'गर्भयुता विपद्यते' इत्यनेन संवत्सरस्यान्तर्विपद्यते इत्यर्थः । अर्थान्तरमुच्यते । पापद्वयं कुजशनी ताभ्यां सहिते लग्ने वा ताभ्यां दृष्टे गर्भपातो भवति। मध्यसंस्थितत्वं सहितत्वमेव । 'न च सौम्यवीक्षितौ' इत्यनेन पापग्रहवीक्षितावित्यपि सूचितम् । तथाच सारावल्याम्-

"अथवा निषेककाले विलग्नसंस्थौ यदा रुधिरमन्दौ ।
तद्गृहगतेऽथवेन्दौ तद्वीक्षिते वा पतति गर्भः ॥" इति ।

अभिलषद्भिरित्यादिपूर्वश्लोकेन लग्नेनायुर्निरूपणीयमित्युक्तम् । अनेन लग्ने चन्द्रेण च निरूपणीयमिति सिद्धं भवति । युगपत्पृथगेव वेत्यत्र त्रिप्रकारोऽन्वयः ।

युगपत्पृथगेव वा लग्नेन्दू इत्येकः। युगपत्पापद्वयमध्यसंस्थितावेकराशिगतपापद्वयमध्यसंस्थितावित्यर्थः। इति द्वितीयनिमित्तानि च सूचितानि। लग्नशब्देन देहो विवक्षितः। चन्द्रशब्देन मनस्तयोर्देहमनसोः पापद्वयमध्यगतयोः पापफलसूचकदुर्निमित्तगतयोर्विद्यते। प्रच्छकस्तैलाभ्यक्ताक्षिमदनच्छेदनभेदनमुण्डनादिदेहगतंदुर्निमित्तम्। वधबन्धदुःखामङ्गलचिन्तावचनादि मनोगतं दुर्निमित्तम्। क्षुतादि च प्रश्नेकाले जायते चेत्कार्यकर्तुर्नाशो भवतीत्यर्थः। न च सौम्यवीक्षितौ शुभनिमित्तं न दृश्यते चेदित्यर्थः॥ ७॥

(वैतालीयम्)

क्रूरे शशिनश्चतुर्थगे लग्नाद्वा निधनाश्रिते कुजे।
बन्धंत्यगयोः कुजार्कयोः क्षीणेंदौ निधनाय पूर्ववत्॥ ८॥

क्रूर इति। चन्द्राल्लग्नाद्वा चतुर्थगे क्रूरेऽष्टमे कुजे गर्भयुता नारी विपद्यते। लग्नाद्बन्धबन्त्यगयोः कुजार्कयोः शशिनिरीक्षिते सति गर्भयुता नारी विपद्यते। अथवा पूर्ववदित्यनेन कुजार्कपापद्वययुक्ते क्षीणेन्दौ कुजेनार्केण वा युक्ते क्षीणेन्दौ लग्नगत इत्यर्थः तदा गर्भयुता नारी विपद्यते। पूर्ववदिति। अभिलषद्भिरुदयर्क्षमित्युक्तवद्व्ययगैः पापैः क्षीणेन्दौ लग्नगते सगर्भा नारी विपद्यत इति। तथा च सारावल्याम्—

"लग्ने रविसंयुक्ते क्षीणेन्दौ वा कुजेन म्रियते।
व्ययधनसंस्थैः पापैस्तथैव सौम्यग्रहसंयुक्तैः॥" इति।

निमित्तं तु क्रूरे वधबन्धादिकर्तरि तस्मिन्प्राप्ते आयुधधारिणि वा निधनाश्रिते कुजे वृक्षादौ पतति वा निधनं भवति। कुजार्कयोर्दीपाग्न्यादौ हतेव मनसि क्षीणे वा अशोभनं भवतीत्यर्थः। उदयास्तगयोः कुजार्कयोरित्यादि। अत्र क्रमो न विवक्षितः। तथा च सारावल्याम्—

"जामित्रेशेऽर्कदृष्टे लग्नगते वा कुजेऽभिपक्तस्य।
गर्भस्य भवति मरणं शस्त्रच्छेदात्सहजन्या॥" इति।

अनेन युद्धप्रश्नादौ वर्षप्रश्नयोगोऽस्ति। उदयास्तगयोः कुजार्कयोः युद्धं महद्भवतीति द्रष्टव्यम्। कुजार्कयोः क्षत्रियत्वादाग्नेयत्वाच्च तत्रापि विशेषात्कुजस्य वधबन्धाधिपत्यमूह्यम्। तमोमयत्वान्मासाधिपताविति। अर्थान्तरं मासाधिपतिर्गुरुरयनक्षणेत्यादिकालाधिपत्यवशान्मासाधिपतिगुरुपुत्रकारके तस्मिन्निपीडिते गर्भपात इति॥ ८॥

(वैतालीयम्)

उदयास्तगयोः कुजार्कयो—
र्निधनं शस्त्रकृतं वदेत्तदा।

मासाधिपतौ निपीडिते
तत्काले श्रवणं समादिशेत् ॥ ९ ॥

( वंशस्थम् )

शशाङ्कलग्नोपगतैः शुभग्रहै-
स्त्रिकोणजायार्थसुखास्पदास्थितैः ।
तृतीयलाभर्क्षगतैश्च पापकैः
सुखी तु गर्भो रविणा निरीक्षितः ॥ १० ॥

उदयास्तगयोरिति । शशाङ्केति । इत्येवं स्थितैः शुभपापग्रहैर्गर्भः सुखी पुष्टिमान् भवति । रविणाभिवीक्षित इति गर्भस्य विशेषणं कथमिति चेदुच्यते । गर्भशब्देनाधानलग्नं प्रश्नलग्नं वा प्रोच्यते । लग्नदेहयोर्भेदाभावात् । तथा च सारावल्याम्-

"बुधगुरुशुक्रैर्दृष्टोऽर्केण च विवर्धते गर्भः ।
मासाधिपबलतुल्यैस्तैस्तैः संयुज्यते भावैः ॥"

इति किमर्थं पुनर्गर्भस्य रविवीक्षित इति विशेषणत्वेनोक्तम् । प्रश्नजातकयोर्लग्नराशिः पुरुषः स्वयं तद्वशात्पुरुषस्य शुभाशुभसर्वस्वचिन्तनार्थम् । अनेन श्लोकेन भूयिष्ठं प्रश्नफलं निरूपणीयम् । तथा च सारसमुच्चये-

"विक्रमलाभविमुक्ताः पापाः सौम्यास्त्रिषष्ठाष्टमान्त्यस्थाः ।
रव्यादि दुःखदाः स्युर्गुलिकः केन्द्रत्रिकोणनिधनेषु ॥" इति ।

षष्ठाष्टमव्ययेषु क्रूराणां शुभानां च स्थितिः शुभा भवतीत्युक्तस्तथाप्यष्टमस्थस्य शुभस्यायुर्विषये शुभफलप्रदत्वं कथयति । जायार्थशब्देनाष्टमस्थानमपि सूचितम् ।

"सौम्यैर्ग्रहैस्तु दृष्टे लग्ने युक्ते भवेद्विगतशोकः ।
सकलत्रसप्तमभे पञ्चमभे पुत्रसंभवं विन्द्यात् ॥
आयुषि चेद्दीर्घजीवी पुण्ये पुण्यालयं वृद्धिम् ।" इति

इत्यत्र प्रथमं लग्नदोषगुणाश्चिन्त्याः । लग्नस्य देहत्वात्पञ्चमनवमौ तत्समावेव तत्सूचनार्थं त्रिकोणं प्रथममुक्तम् । तथा च विद्वज्जनवल्लभाख्ये प्रश्नशास्त्रे ।

"पृष्ठोदये स्याद्यदि धर्मसंस्थः पापो भवेदात्मजसंस्थितो वा ।
नाशस्त्वयं क्षिप्रमिहास्ति नूनमितोपसर्पति यदेतदाशु ॥" इति

तथान्यत्र-

"मतमपञ्चमनवमोपगैर्गुरुबुधशुक्रैर्यथेप्सितावाप्तिः ।
षटत्रिभवायोपगतैः क्षितिसुतरविसूर्यजैस्तद्वत् ॥"

किञ्च पंचमं पुत्रस्थानं बुद्धिस्थानं च, नवमं पितृस्थानं भाग्यस्थानं च । तस्माच्च त्रिकोणयोर्लग्नसममस्ति । षट्त्रिकलाभोपगतैरित्यत्र षष्ठे पापाः शुभा इत्युक्तम् । 'शशांकलग्नोपगतैः शुभग्रहैः' इत्यत्र तृतीयलाभर्क्षगतैरित्येवोक्तम् । तस्मात्षष्ठस्थानगानां पापानां स्थितिर्न प्रशस्ता । तत्रायं विशेषः । देहविषये प्रश्ने षष्ठे पापस्थितिरप्रशस्ता । षष्ठस्थानस्य रोगसूचकत्वात् 'व्रणकृदशुभः षष्ठे लग्नात्तनौ पापाश्रित' इति वक्ष्यति च । शशांकलग्नोपगतैरित्युक्तत्वाल्लग्नाच्चन्द्राच्च निरूपणीयमिति स्पष्टमुक्तम् । ताभ्यामन्ये च भावाश्चिन्त्याः तयोर्बलाधिकादित्यादि सिद्धं भवति । बलाबलविकल्पेन तयोरुक्तं विचिंतयेदिति वक्ष्यति त्रिकोणजायार्थसुखास्पदस्थितैरित्यत्र क्रमेण निरूपणीयमिति सूचितम् । आत्मनिरूपणादनन्तरं शुभस्थानं वा निरूपणीयम् । गृहस्थस्य पुत्रस्थानमन्येषां धर्मस्थानं पुरुषार्थयोर्योनित्वात्ततो गृहस्थस्य स्वभार्यास्थानं तत एव गृहपतिः स्त्रीवर्गफलं, साधयति सर्वेषां कर्मणां धनसापेक्षत्वाद्धनस्थानं च विशेषाच्चिन्त्यम् । तथा चोक्तं वाग्भटेन—

"उत्तिष्ठेत ततोऽप्यर्थमर्थमुत्थानबन्धुषु ।
निन्दितं दीर्घमप्यायू रक्षन्ति हितसाधनम् ॥"

इति पूर्वबन्धुग्रहं सुहृज्जलादि चिन्त्यम् । पुनः कर्म निरूपणीयमित्यादि ॥९॥ १०॥

( शार्दूलविक्रीडितम् )

ओजर्क्षे पुरुषांशकेषु बलिभिर्लग्नार्कगुर्विन्दुभिः
पुंजन्म प्रवदेत्समांशकगतैर्युग्मेषु तैर्योषितः ।
गुर्वर्कौ विषमे नरं शशिसितौ वक्रश्च युग्मे स्त्रियं
द्व्यङ्गस्था बुधवीक्षिताश्च यमलौ कुर्वंति पक्षे स्वके ॥ ११ ॥

ओजर्क्ष इति । क्रूरः सौम्यः पुरुषवनिते इत्यत्रौजराशीनां पुरुषसंज्ञोक्ता तेनौजराशौ ओजांशे मेषमिथुनादौ पुंस्त्वं भवति लग्नस्यार्कस्य गुरोरिन्दोश्चौजराश्यंशकयोः स्थितिश्चेन्निःसंदिग्धं पुंजन्म भवतीति वक्तव्यम् । युग्मराशौ युग्मांशकगतैस्तैर्योषितो जन्म वक्तव्यम् । किमत्र राशिगुणादेव पुंस्त्रीविभागो निरूप्यते न चेत्पुरुषग्रहयोरर्कगुर्वोर्गुणोऽपि निरूपणीयो भवति । इह प्रकारान्तरमुच्यते । लग्नस्य लग्नांशस्यौजत्वे चन्द्रस्यापि स्त्रीग्रहत्वे स्वस्त्रीराश्यंशकत्वात्स्त्रीत्वं वक्तव्यम् । अर्कगुर्वोः स्त्रीराश्यंशकयोः स्त्रीत्वं तस्मात्स्त्रीत्वलक्षणस्याधिक्याद्योषितो योषिज्जन्म, प्रवदेदित्युक्तम् । गुर्वर्कौ विषमे इत्यादि स्वतः पुरुषग्रहयोर्गुर्वर्कयोरर्कस्य पुंस्त्वसूचकत्वम् । राश्यंशकयोर्युग्मसंज्ञयोः स्त्रीसूचकत्वमुक्तं च । कथमिदमुपपन्नं भवति । उच्यते—

चक्रस्य तु नष्टादौ चौरादिपरिज्ञाने पुरुषसूचकत्वम्। नराख्तु शेषा इत्यत्र रविः पिता, गुरुः पुत्रः, कुजो भ्राता इत्यभिप्रेतः। पुत्रविषये पुत्रस्थानगतश्च पुत्रमरणं पुत्रोऽथवैनैपच्छतीत्युक्तस्य भौमस्य स्त्रीराश्यवस्थाने स्त्रीसूचकत्वम्। तथा च प्रश्नशास्त्रान्तरे-

"आरूढलग्नच्छन्नेन्दुसुतधर्मास्तगे कुजे।
शुभस्थैर्नैव दृष्टे तु वक्तव्या ह्यनपत्यता॥" इति।

'शशिसितौ वक्रश्च युग्मे स्त्रियं कुर्वन्ति' इत्युक्तम्। तत्र शशिसितयोः सहपाठः कृतः वक्रश्चेति पृथगुपदेशस्तेनायमर्थो गम्यते शशिसितयोर्युग्मराश्यवस्थाने वक्रस्यापि युग्मावस्थानं सूचकम्। ओजर्क्षे पुरुषांशकेष्वित्यनेन राश्यंशकयोराहृतद्रव्यस्य च विषमसंख्यत्वं सूचितम्। पुरुषांशकेषु पुरुषाणां दक्षिणभागेषु कालाङ्गानीति कल्पनयौजराशिवशेन पुंजन्म व्यत्यये स्त्रीजन्म किं बहुना यद्यदोजसंज्ञं यत्पुरुषसंज्ञं च तत्पुरुषसूचकम्। एतद्विपरीतसूचकमित्यर्थः। किंचिदर्थान्तरमस्ति ओजर्क्षे पुरुषांशकेषु स्थितैर्बलिभिर्लग्नार्कगुर्विन्दुभिर्जाताः पुंजन्मभाजो भवन्ति शक्ता भवन्तीत्यर्थः। अन्यथा स्त्रीजन्मभाजः चपला इत्यर्थः। शेषेण यमललक्षणमुच्यते॥११॥

( उपजातिः )

विहाय लग्नं विषमर्क्षसंस्थः
सौरोऽपि पुंजन्मकरो विलग्नात्।
प्रोक्तग्रहाणामवलोक्य वीर्यं
वाच्यः प्रसूतौ पुरुषोऽङ्गना वा॥ १२॥

विहायेति। सौरोऽपीत्यपिशब्दान्नपुंसकसंज्ञोऽपि विषमर्क्षसंस्थितिवशात्पुंजन्मकरः स्यादिति सूचितम्। प्रोक्तग्रहाणामिति। प्रोक्तानां रविचन्द्रकुजगुरुशुक्राणां मध्ये स्त्रीग्रहो बलवान्। पश्यति गतो वा पुत्रस्थानं यदि स्त्रीजन्म पुंग्रहस्तथा स्थितश्चत्पुंजन्म वीर्यं कारणम्। अर्थान्तरं रविगुर्वोः पुंस्त्वं चन्द्रशुक्रयोः स्त्रीत्वम्। तेषां पुंस्त्रीराशिगतत्वादवलोक्य प्रसूतौ पुरुषो वाच्यः अङ्गना वा पुरुषस्त्रीतरचेष्टा वा यत्किंचित् पुरुषसंज्ञवशात्पुंजन्म यत्किंचित्स्त्रीसंज्ञावशात्स्त्रीजन्म इति॥ १२॥

( शार्दूलविक्रीडितम् )

अन्योन्यं यदि पश्यतः शशिरवी यद्यार्किसौम्यावपि
वक्रो वा समगं दिनेशमसमे चंद्रोदयौ चेत्स्थितौ।
युग्मौजर्क्षगतावपीन्दुशशिजौ भूम्यात्मजेनेक्षितौ
पुंभागे सितलग्नशीतकिरणाः षट् क्लीबयोगाः स्मृताः॥१३॥

अन्योन्यमिति। एवं क्लीबयोगा उक्ताः न केवलमाधानप्रश्नकालाभ्यां नपुंसकजन्मसूचकाः जातस्य जन्मकाले सन्ति चेत्संततिहानिकरा इति केचित् ॥ १३ ॥

(शार्दूलविक्रीडितम्)

युग्मे चंद्रसितावथौजभवने स्युर्ज्ञारजीवोदया
लग्नेंदू नृनिरीक्षितौ च समगौ युग्मेषु वा प्राणिनः।
कुर्युस्ते मिथुनं ग्रहोदयगतान्द्व्यङ्गांशकान्पश्यति।
स्वांशे ज्ञे त्रितयं ज्ञगांशकवशाद्युग्मं त्वमिश्रैः समम् ॥ १४॥

युग्म इति–अनेन श्लोकेन मिथुनप्रयोगं दर्शयते। युग्मे चन्द्रसितावित्येकः, ओजभवने स्युर्ज्ञारजीवोदया इति सिद्धं भवति ॥ १४ ॥

(उपजातिः)

धनुर्धरस्यान्तगते विलग्ने
ग्रहैस्तदंशोपगतैर्बलिष्ठैः।
ज्ञेनार्किणा वीर्ययुतेन दृष्टे
संति प्रभूता अपि कोशसंस्थाः ॥ १५ ॥

धनुर्धरस्येति। अस्य योगस्य दुर्लभत्वात्फलमपि दुर्लभं भवति। उत्तरत्र लग्नात्पुत्रकलत्रभे इत्याद्युक्तस्यापत्यस्य पुत्रस्त्रीनपुंसकत्वम्। एकादित्वबहुत्वे 'ओजर्क्षपुरुषांशकेषु' इत्यादिभिः पञ्चभिः श्लोकैर्निरूपणीये भवतः ॥ १५ ॥

(कुटक-वृत्तम्)

कललघनांकुरास्थिचर्मांगजचेतनताः
सितकुजजीवसूर्यचंद्रार्किबुधाः परतः।
उदयपचन्द्रसूर्यनाथाः क्रमशो गदिता
भवंति शुभाशुभं च मासाधिपतेः सदृशम् ॥ १६ ॥

कललेति। आधानकालादारभ्य सप्तसु मासेषु कललादीनि जायन्ते तेषां कललादीनां दातारः सितादयो मासाधिपा भवन्ति शुभाशुभं च मासाधिपतेः सदृशमित्युक्तत्वात्सितादयः प्रथमादिमासाधिपतयः इति सिद्धं भवति। प्रथमादिसप्तसु मासेषु कललादि सप्तावस्था जायन्ते। परिशिष्टेषु त्रिषु मासेषु अष्टमे मासि क्षुत्तृष्णा नवमे मास्युद्वेगः दशमे मासि परिपूर्णगर्भः पक्वं फलमिव भवति। प्रयोजनाभावादष्टमस्य क्षुत्तृष्णावस्था नोक्ता परतोऽष्टमादिमासेषूदयपचन्द्रसूर्यनाथा इत्यर्थः। तथा च सारावल्याम्–

"मासेष्वाधानादिषु गर्भस्य यथाक्रमेण जायन्ते ।
सप्तसु कललघनांकुरास्थित्वग्रोमचेतनानि ॥
पुनरष्टमे मासि तृष्णा क्षुधा च नवमे तथोद्वेगः ।
दशमे ततोऽतिपूर्णः पक्वमिव फलं भवति ॥" इति

अर्थान्तरम् । मासाधिपतेः सदृशमिति 'मासाधिपो न क्षणे' इत्यादिना गुरुरुच्यते पुत्रकारकत्वाद्गुरोर्बलं चिन्तनीयमित्यर्थः ॥ १६ ॥

( वंशस्थम् )

त्रिकोणगे ज्ञे विबलैस्तथापरै-
र्मुखांघ्रिहस्तैर्द्विगुणस्तदा भवेत् ।
अवाग्गवीन्दावशुभैर्भसंधिगैः
शुभेक्षितश्चेत्कुरुते गिरं चिरात् ॥ १७ ॥

त्रिकोणगे इति । लक्षणसामर्थ्ये यथोक्त एवार्थः ईषन्न्यूनत्वे द्विगुणत्वं बहुत्वमेवोह्यम् । अवागिति । अशुभैरित्यत्र तृतीया विभक्तिर्हेतौ एकेन पापेन भसंधिगेन वाचोऽलसत्वं द्वाभ्यां वाचोऽल्पत्वं त्रिभिः पापैर्भसन्धिगैः मुग्धत्वमप्यूह्यम् । अर्थान्तरम् । शुभेक्षित इत्यस्मादीक्षितशब्दमध्याहृत्य अशुभैरीक्षितैरित्यन्वयः कर्तव्यः । तदानीं वृषभसंधिगैरशुभैरीक्षितेऽवागपीत्यर्थः । तथा च सारावल्याम्—

"क्रूरैर्ग्रहैः सन्धिगतैः शशिनि वृषे सौरभे भौमसंदृष्टे ।
मूकः सौम्यैर्दृष्टे वागपि कालान्तरे भवति ॥"

अत्र गोशब्दो वाक्पर्यायत्वेनाप्यूह्यः गवि वाक्स्थाने स्थितैः अशुभैरथवा वाक्स्थाने शुभैर्वीक्षिते चेन्दौ अशुभैः सहिते वीक्षिते वा अवाग्भवति वाग्गुणहीनो भवतीत्यर्थः ॥ १७ ॥

( मन्दाक्रान्ता )

सौम्यर्क्षांशे रविजरुधिरौ चेत्सदन्तोऽत्र जातः
कुब्जःस्वर्क्षे शशिनि तनुगे मन्दमाहेयदृष्टे ।
पंगुर्मीने यमशशिकुजैर्वीक्षिते लग्नसंस्थे
संधौ पापे शशिनि च जडः स्यान्नचेत्सौम्यदृष्टः॥१८॥

सौम्यर्क्षांशे इति । बुधांशके बुधराशौ वा तमोमयौ रविजरुधिरौ चेदस्मिन्योगे सदन्तो दन्तसहितो गर्भस्थो वाच्यः ( चेत्सदन्तः सत् शोभनमन्तः-करणं यस्य

१ सदन्त इत्यत्र शोभनान्तःकरणरूपार्थे सदन्तरत्र जातः स्यात्तदा छंदश्छुटिरनुमेया ।

स सदन्तः शुभमानस इत्यर्थः। अथवा सदन्तः शुभमरणमिति वा। कुब्जः स्वर्क्षे शशिनि तनुगे इत्यत्र बहवः प्रकारा द्योत्यन्ते। लग्नस्थस्य चन्द्रस्य फलं भावाध्याये-

"मूकोन्मत्तजडांगहीनबधिरः प्रेष्यः शशांकोदये" इति वक्ष्यति।

पुनः 'स्वर्क्षोजोच्चगते धनी' इति च वक्ष्यति। स्थानाश्रितराशिवशात्फलस्यान्यथात्वं दर्शितम्। इह तु स्वर्क्षे चन्द्रे लग्नगे मन्दमाहेयदृष्टे इति विशेषात्कुब्जत्वमप्युक्तम्। तस्माद्ग्रहस्यान्यग्रहदर्शनवशादपि फलभेदोऽस्तीति च तर्कणीयम्। पंगुर्मीने इति प्रश्नादौ मीनराशौ लग्नगते पंगुगतिरुक्ता। अथ मूढश्चपलः न चेत्सौम्यदृष्टिरिति सर्वारिष्टयोगेषु क्षेपणीयम्॥ १८॥

( दोधक-वृत्तम् )

सौरशशांकदिवाकरदृष्टे

वामनको मकरांत्यविलग्ने।

धीनवमोदयगैश्च दृकाणैः

पापयुतैरभुजांघ्रिशिराः स्यात्॥ १९॥

सौरेति। सौरशशाङ्क इति श्लोकपूर्वार्धः स्पष्टार्थः। धीनवमोदयगैरिति। लग्नादिद्रेष्काणेषु पापयुक्तेषु हस्तबाधा, तृतीयद्रेष्काणेष्वङ्घ्रिबाधा। अथवा धीराशिगतेषु त्रिषु द्रेष्काणेषु हस्तबाधा, नवमराशिगतेषु त्रिषु द्रेष्काणेषु अङ्घ्रिबाधा इत्यादि द्रष्टव्यम्॥ १९॥

( हरिणीवृत्तम् )

रविशशियुते सिंहे लग्ने कुजार्किनिरीक्षिते

नयनरहितः सौम्यासौम्यैः सबुद्बुदलोचनः।

व्ययगृहगतश्चन्द्रो वामं हिनस्त्यपरं रवि-

स्त्वशुभगदिता योगा याप्या भवन्ति शुभेक्षिताः॥२०॥

रवीति। रविशशिकुजार्किभिर्नयनरहितो जायते कथं सिंहलग्ने रविशशिभ्यां युक्ते कुजार्किदृष्टे अन्धो भवति। सौम्यासौम्यैर्दृष्टे सबुद्बुदलोचनोऽर्थात्सौम्येन दृष्टे सौम्यैर्दृष्टेऽन्धः इति। व्ययगृहगते रविचन्द्रयोः कुजार्किदृष्टिरनुवर्तते उत्तरशनिष्टाध्याये "निधनारिधनव्ययस्थिता रविचन्द्रारयमा यथाक्रमम्॥ बलवद्ग्रहदोषकारणैर्मनुजानां जनयन्त्यनेत्रताम्॥" इति वक्ष्यति। तेन बहवो योगा उत्पन्ते। कथमिति चेदुच्यते यथाक्रमम्। बलवद्ग्रहदोषकारणैर्यथाविधि 'मधुपिङ्गलदृग्' इत्यादिग्रन्थोक्तस्य पित्तादिभिर्बलवद्ग्रहदोषैर्दशाकाले निधनादिधनव्ययस्थिता रव्यादयो गर्भस्य

जातस्य वां नेत्रहानिं जनयन्ति । तत्रायमुपदेशो वेदितव्यः । उत्क्रमेण ग्रहाणां स्थितौ रविचन्द्रौ व्ययधनगतौ यमारौ निधनारिगतौ चेदन्धो भवतीति । तथा च सारावल्याम्-

"धनराशौ द्वादशभे चन्द्रार्कौ वीक्षितौ यस्य ।
सोऽपि भवत्येवान्धो यद्यष्टमषष्ठगाः पापाः ॥" इति ।

निधने रविः पापदृष्टश्चेन्नयनपीडा स्वल्पात्मजो निधनगे विकलेक्षणश्चेति भावाध्याये । अथ यथायोगं वक्ष्यति इति च षष्ठान्त्ययोः रविचन्द्रयोर्व्ययगतस्य रवेश्च स्वन्यावक्षं नयनहन्तृत्वमुक्तम्-

"लग्नाद्व्ययारिगतयोः शशितिग्मरश्म्योः ।
पत्न्या सहैकनयनस्य वदन्ति जन्म ।"

इत्युक्तत्वात्तस्माद्व्यारिगतयोश्चन्द्रसूर्ययोःकुजसौरयोश्च नयनहन्तृत्वमूह्यम् । दिनकरप्रतिमोऽन्यसंस्थ इत्युक्तत्वाद्दिनकरसमोऽन्यत्र कथितः इत्युक्तत्वाच्च । तथा च सारावल्याम्-

"वक्रो वा सौरो वा द्वादशभे वीक्षिते नयनहन्ता ॥"

अधनार्योः स्थितयोः क्रमेणोत्क्रमेण वा रविचन्द्रयोर्धनव्ययगतयोरारयमयोर्दृष्टिर्भवत्येव तदा नेत्रनाशो भवति । नेत्ररोगं वैकल्यादिर्वा भवतीत्याद्यभ्यूह्यम् । यथाक्रममित्यत्र यथातथा इत्यपि पाठः । अशुभगदिता योगा याप्या भवन्तीति सर्वारिष्टयोगापवादः ॥ २० ॥

( वसंततिलका )

तत्कालमिन्दुसहितो द्विरसांशको य-
स्तत्तुल्यराशिसहिते पुरतः शशांके ।
यावानुदेति दिनरात्रिसमानभाग-
स्तावद्गते दिननिशोः प्रवदन्ति जन्म ॥ २१ ॥

प्रसवलग्ने निर्णय उच्यते-

तत्कालमिति । इन्दुसहितराश्यंशयोर्यस्य बलाधिक्यं तस्य द्वादशांशोऽत्रद्विरसांशशब्देनोच्यते । बलयोगात्फलमंशफर्क्षयोरित्युत्तरत्र स्वयमेव वक्ष्यति । तत्कालेन्दुनवांशद्वादशभागे विनिर्दिशेच्चन्द्रमिति शास्त्रान्तरेप्युक्तम्,-ततश्चन्द्रस्य नवांशस्थितिर्यत्नेन निरूपणीया । तत्कालमिति प्रश्नकालाधानकालौ द्वावपि गृह्येते ॥ २१ ॥

( मालिनी )

उदयति मृदुभांशे सप्तमस्थे च मन्दे
यदि भवति निषेकः सूतिरब्दत्रयेण ।

शशिनि तु विधिरेष द्वादशेऽब्दे प्रकुर्या-
न्निगदितमिह चिंत्यं सूतिकालेपि युक्त्या ॥ २२ ॥

इति श्रीवराहमिहिराचार्यकृते होराशास्त्रे बृहज्जातके
निषेकाध्यायश्चतुर्थः ॥ ४ ॥

उदयतीति। न केवलं तत्कालमिन्दुसहितमित्यादिना प्रसवकालो निर्णीयते। लग्नचन्द्राभ्यां द्वाभ्यामपि निरूपणीयमित्यनेन श्लोकेन सिद्धं भवति। अपि च राश्यंशकालाधिपाश्विन्याः चन्द्रांशकैः कालविधानमूह्यम्। ननु शनेर्दृष्टिरेवापेक्षणीया चेत्सप्तमस्थे मन्दे इति न वक्तव्यम्। नैष दोषः। अन्यदप्याकूतमस्ति। सप्तमस्थ-शनिर्दिग्बलयुक्तः केन्द्रस्थाने भवति। लग्नद्रष्टा च भवति। तस्मात्तेन फलं वक्ष्यामीति। शनिमृदुभागके मारेशमन्ददृष्ट्येन द्वादशाब्देन शशिनः कालविलंबउक्तः। एवं राश्यंशकतदधिपतिदृष्टग्रहवशाच्चिरान्मध्यमकालेनाशु वा प्रसवकालाश्विन्य इत्युक्तं भवति। त्रिभिर्लक्षणैः। संवादभूयिष्ठायां चिन्तायामेवायं विधिः। तथाहि-प्रारब्धस्य कार्यस्य वा लब्धिकाल ऊह्य इति सूचितम्। इह गदितं सूतिकालेपि युक्त्या इति। गर्भस्रावादि न वक्ष्यामिति। तत्र तत्र युक्त्या चिन्त्य-मिति सिद्धं भवति। देशकालानुरूपमपि चिन्त्यम्।पुनः प्रसवविलम्ब इत्यर्थः २२।

इति श्रीवराहमिहिराचार्यकृतबृहज्जातकदशाध्यायीटीकायां वियोनिजन्माध्यायः समाप्तः ॥ ४ ॥

## अथ सूतिकाध्यायः ५.

(अनुष्टुप्)

पितुर्जातः परोक्षस्य लग्नमिन्दावपश्यति।
विदेशस्थस्य चरभे मध्याद्भ्रष्टे दिवाकरे ॥ १ ॥

जन्माध्याय उच्यते-

पितुरिति। तत्र मातृकारकस्य चन्द्रस्य लग्नदर्शनाभावे पितुः परोक्षत्वमित्यु-क्तस्य किंचिदभिप्रायान्तरमस्ति मातृविषयमरिष्टादिलक्षणं न पितृविषयं भवति तासान्तु मातृमरणं निधने इत्युक्तत्वात्। अथवा दिवाकरे लग्नमपश्य-तीति वान्वयः। मध्याद्भ्रष्टे उदासीनराशेर्भ्रष्टे। 'भ्रंशु अनवस्थाने' इति धातुः। तस्माद्भ्रष्टशब्देन हीनबले शत्रुनीचर्क्षगत इत्यर्थः परोक्षस्यासन्निकृष्टस्य पितुर्जात इत्युक्तं भवति चिरकालं पितृसहवासो न भवतीति वा। उक्तं च बृहस्पतिना विवाहप्रश्ने-

"यदि नीचारिगो लग्नमारूढं वा न पश्यति।
अर्कः स्त्रियः पिता नास्ति मातेन्दुश्चेत्तथाविधः॥"

पुनरप्यर्थान्तरमूह्यम् । विदेशस्थस्येति । विवाहप्रश्ने इति। अयं विधिः फलदग्रहविषयः । लग्नेशविषये वा चरराशौ स्थिते विदेशे वर्तते, चरद्रेष्काणे नवांशे वा तस्मिन् ग्रहे मध्याद्दशमाद्वा सप्तमस्थिते विदेशगतः प्रोषित इति वाच्यः । तथा च कृष्णीये-

"चरराशौ च विलग्ने द्रेष्काणे वा चरांशकेऽभ्युदिते ।
मध्याच्च्युते वा ग्रहे प्रवासचिन्तां विजानीयात् ॥" इति।

मध्याद्भ्रष्टे इत्यनेन ऊहप्रकारः सूचितः कथमुच्यते मध्यलग्नादारभ्य पाताललग्नपर्यन्तं चक्रार्द्धभागमितरार्धभागः स्वदेशः ततो मध्याद्भ्रष्टे विदेशगत इत्युक्ते सप्तमस्थे परमविप्रकर्षाद्दन्तव्यदेशस्थ इत्यूह्यः । पाताललग्नान्तरस्थे विदेशात्स्वदेशं प्रति निवृत्तिः । ग्रहस्तावच्चक्रगत्या पश्चिमाभिमुखः इत्यपि दृश्यते । तस्मान्मध्याद्भ्रष्टे विदेशगत इत्युपपन्नम् । पुनः सप्तम राशेश्चतुर्थराश्यभिमुखं इव दृश्यते अवलम्बमानो दृश्यते । ततश्चतुर्थराशिगते गृहगत इत्युपपन्नम् । तथा च कृष्णीये-

"हिबुकं ग्रहे प्रविष्टे गृहप्रविष्टं प्रवासिनं विन्द्यात् ।
हिबुकास्तमयान्तरगे ग्रहे तु पथि वर्तते पुरुषः ॥" इति ॥ १ ॥

(अनुष्टुप्)

उदयस्थेपि वा मन्दे कुजे वास्तं समागते ।
स्थिते वांतः क्षपानाथे शशांकसुतशुक्रयोः ॥ २ ॥

उदयस्थ इति । उदयसप्तमराश्योरपि प्रवासी विदेशस्थ एव न तदानीमागच्छतीत्यादि । शशांकसुतशुक्रयोः क्षपानाथे चोदयास्तमयोः सत्सु यान्त इति विदेशस्थः स्थितदेशात्स्वदेशं प्रति निर्गत इत्यर्थः । शशांकबुधशुक्राणां सूर्याच्छीघ्रगतित्वात् ॥ २ ॥

(अनुष्टुप्)

शशांके पापलग्ने वा वृश्चिकेशत्रिभागगे ।
शुभैः स्वायस्थितैर्जातः सर्पस्तद्वेष्टितोपि वा ॥ ३ ॥

शशांक इति । विपल्पोक्त्या कोपि विशेष ऊह्यः । पापक्षेत्रं लग्नं, शशांकलग्नयोरुभयोरपि वृश्चिकेशत्रिभागाश्रितत्वे संवादात्केवलः सर्पः संवादाभावे तद्वेष्टित इति । अथवा वृश्चिकेशत्रिभागगो वृश्चिकराशिस्थद्रेष्काणो वृश्चिकाधारद्रेष्काण इत्यर्थः । वृश्चिके हि प्रथमद्रेष्काणो वृश्चिकसंज्ञः, द्वितीयो मीनसंज्ञः, तृतीयः कुलीरः, एते सरीसृपाः । तथा च कृष्णीये-

"वृश्चिकमीनकुलीराः सरीसृपाणां वदेद्योनिः ॥" इति ।

एतेषु द्रेष्काणेषु सरीसृपा ऊह्याः । अथवा वृश्चिकेशशब्देन कुलीरराहू उच्यते तद्युक्ते त्रिभागे लग्नगते सर्पे वक्त इत्युक्तं भवति । तद्वेष्टितोऽपि वेति विकल्पोक्त्या सर्वत्र लक्षणे ईदृशविकल्प ऊह्यः । पापलग्नशब्देन विषधरा उच्यन्ते तेषामीशाः सर्पास्तैर्युक्तेषु त्रिभागेषूद्यत्सु चन्द्राधिष्ठितेषु वा सर्पा ऊह्याः । अथवा वृश्चिकेशशब्देनोभयोदये प्रसूतौ चन्द्रेऽप्युभयाश्रितेंऽशराशौ वा यमलांशे जायेशग्रहयुक्ते द्यूनभे बलिनि चन्द्रे भार्याद्वितीयं प्रवदेत्तृतीये तु गुणविशेषेणेत्यादि ॥ ३ ॥

( अनुष्टुप् )

चतुष्पादगते भानौ शेषैर्वीर्यसमन्वितैः ।
द्वितनुस्थैश्च यमलौ भवतः कोशवेष्टितौ ॥ ४ ॥
छागे सिंहे वृषे लग्ने तत्स्थे सौरेऽथवा कुजे ।
राश्यंशसदृशे गात्रे जायते नालवेष्टितः ॥ ५ ॥

चतुष्पादेति । अस्मिन् योगे जातः कदाचिद्बद्धो भवतीत्यपि सूचितम् । अथ प्रश्नादौ बद्धो न वेति पृष्टे ध्रुवं च बद्धो भवतीत्याद्यूह्यम् ॥ ४ ॥ ५ ॥

( वंशस्थम् )

न लग्नमिन्दुं च गुरुर्निरीक्षते
न वा शशांकं रविणा समागतम् ॥
सपापकोऽर्केण युतोऽथवा शशी
परेण जातं प्रवदन्ति निश्चयात् ॥ ६ ॥

न लग्नमिति । लग्नं चंद्रं च गुरुरेकप्रकारेणापि नावलोकयति एको योगः । अथवा लग्नं विधोः रविणा समागतः शशाङ्को गुरुणा न दृष्टश्च द्वितीयो योगः । सपापकोऽर्केण युतः शशाङ्को गुरुणा न दृष्टश्चेत्तृतीयो योगः । अत्र योगाः परजातत्वसूचकाः । अत्रोत्तरयोगयोः प्रथमयोगस्य परयोगान्तरभावात्किमर्थमुपदेशः कृत इति चेत्कोऽपि विशेषोऽभ्यूह्यः । रविणा समागतम् इत्यत्र रविशशिनोरत्यन्तसंनिकृष्टत्वम् । सपापकोऽर्केण युत इत्यत्रैकराशौ योगमात्रमेवोह्यते । न लग्नमिन्दुं च गुरुर्निरीक्षते इत्यत्र न चन्द्रस्य गुरुवर्गस्थितिरपि निषिध्यते गुरोः सत्त्वगुणात्मकत्वाज्ज्ञानस्वरूपकत्वाद्विप्रवर्णस्वामित्वाच्च लग्नचन्द्रयोस्तस्य प्रेक्षणेन तस्याः शुद्धिर्न भवति । लग्नशशिनौ जातशिशोश्चन्द्रो माता, जातस्य च परजातत्वेन

मातुश्च दोषो भवति परपुरुषगामित्वादित्येतावता लग्नचन्द्रयोर्गुरुदृष्ट्या शुद्धिर्न जायत इत्युच्यतेऽनिष्टाध्याये असितकुजयोर्वर्गे तत्स्थे सिते तद्वेक्षिते परयुवतिगः इति वक्ष्यति । तत्रासितकुजयोर्दृष्टत्वे द्रष्टव्यस्य तस्य तयोर्वर्गस्थितिरप्युक्ता तत्रापि चिन्तनीयमस्ति । तथा च भगवान्गार्गिः-

गुरुक्षेत्रगते चन्द्रे तद्युक्ते वान्यराशिगे ।
तद्द्रेष्काणे तदंशे वा न परैजात्र इष्यते ॥ ६ ॥

( वैतालीयम् )

क्रूरर्क्षगतावशोभनौ सूर्याद्द्यूननवात्मजस्थितौ ।
बद्धस्तु पिता विदेशगः स्वे वा राशिवशादथो पथि ॥ ७ ॥

क्रूरर्क्षेति । बद्धस्त्वित्यत्र तुशब्देन दिवाकरेन्द्वोरिति दिवार्कशुक्राविति श्लोकाभ्याम् अर्थो निरूपणीय इत्युक्तं भवति । तथा च सारावल्याम्-

"द्युनिशोरर्कासितयोः कुजेन संदृष्टयोः पिता बन्धे ।
परदेशे चरराशौ युक्तेक्षितयोश्च तत्र मृतः ॥
क्षीणे शशिनि च पापे माता म्रियते रवौ पिता तद्वत् ।
पापैर्बलिभिर्दृष्टे मिश्रैर्व्याधिः शुभं सौम्यैः ॥
चन्द्रात्रिकोणराशौ रविजो मातुर्वधं दिशति ।
रात्रौ शुक्रात्तथैव दिवसे भौमः पापेन संदृष्टः ॥
यत्र स्त्री तत्रस्थो रुधिराख्यशनैश्चरेक्षितश्चन्द्रः ।
जननी मृत्युं कुर्यान्नतु सौम्यनिरीक्षिते सद्यः ॥
रुधिरशनैश्चरदृष्टो दिवाकरो दिवसजन्म ।
निरीक्षितः पापयुतो हन्यात्पितरमसंशयं जातः ॥
सूर्यादष्टमराशौ यदि युक्तौ सौरलोहितौ प्रसवे ।
सौम्यादृष्टौ निधनं कुर्यातां सद्य एव पितुः ॥
पापग्रहसंयुक्तश्चरराशिगतो दिवाकरः प्रसवे ।
विषजलशस्त्रैस्तस्मिन् कथयति अल्पायुषं पुरुषम् ॥" इति ।

रात्रिजातस्य सूर्यस्थाने शशिनं प्रकल्प्यार्कादुक्तानि लक्षणानि वदेत् । दिवा-शुक्रचन्द्रवत्प्रकल्प्य मातुर्लक्षणानि वदेत्। रात्रौ चन्द्रान्मातुरिति । दिवार्कशुक्रावित्यनेन सिद्ध्यति । नवमाधिपं सूर्यवत् । चतुर्थाधिपं चन्द्रवत् परिकल्प्य सर्वान्पितृमातृगुणदोषान् वदेत् । अत्र तु विदेशगतं प्रति पृच्छति चेल्लग्नाद्द्यूननवात्मजस्थितावशोभनौ यदि तदा विदेशगतः । पुरुषो बद्ध इति वक्तव्यम् । क्रूरर्क्षगतावित्यनेन सर्वत्रानिष्टफलदानां ग्रहाणां स्थितस्थानं च च निरूपणीयमित्युक्तं भवति।

क्रूरर्क्षगताविंत्यत्र कोऽपि विशेषोऽभिमतः । क्रूरर्क्षगतावोजराशिगताविति । 'क्रूरः सौम्यःपुरुषवनिते' इत्युक्तत्वादोजराशित्वाच्च पापक्षेत्रत्वाच्च राशेः क्रूरत्वे तत्रस्थयोरशोभनयोरिति क्रूरत्वम् इति ॥ ७ ॥

(वैतालीयम्)

पूर्णे शशिनि स्वराशिगे सौम्ये लग्नगते शुभे सुखे ।
लग्ने जलजेऽस्तगेऽपि वा चन्द्रे पोतगता प्रसूयते ॥ ८ ॥

पूर्णे शशिनीति । शशिनि पूर्णे स्वराशिगे सौम्ये लग्नगते इत्येको योगः । श्लोकशेषेण द्वितीयः । तथा च सारावल्याम्—

"सौम्ये लग्ने पूर्णे स्वगृहगते शशिनि सलिलसंयाने ।
पातालस्थैश्च शुभैर्जलभे लग्नेऽस्तभे शशिनि ॥"

अथवा पोतगता पोतेन नावा गता माता गर्भिणी प्रसूयते प्रकर्षेण सूयते सुप्रसवो भवतीत्यर्थः । अथवा पूर्णे शशिनि इति । वर्षप्रश्नसमयेऽपि शशिनि बलपूर्णे जलशब्देन जलजाता राशयः कुलीरमकरान्त्यार्धमीनोक्ताः । अथवा जलशब्देन चन्द्राद्दूद्यः अब्जसंज्ञत्वात्तस्योदये इति । पोतगता इति । पोतगता जनपिच्युच्यते प्रसूयत इति अभीष्टकार्याण्युत्पादयति । वर्षाम्बुबाहुल्येन सर्वत्र नावमारुह्य गच्छन्ति लोका इति । अथ कीदृशेप्रश्ने इति चेदुच्यते पूर्णे शशिनि पूर्वपक्षगते चन्द्रे वा राशिग इति जलराशिरुच्यते । स्वस्यजलात्मकत्वात्सौम्ये लग्नगते सति भूरिभूरिवर्षागमः । श्लोकशेषेणान्यो योगः । तत्र सुखशब्देन खं सुखं गृह्यते खे सुखे वा शुभे इत्यर्थः ॥ ॥ ८ ॥

(वैतालीयम्)

आप्योदयमाप्यगः शशी सम्पूर्णः समवेक्षतेऽथवा ।
मेषूरणबन्धुलग्नगः स्यात्सूतिः सलिले न संशयः ॥९ ॥

आप्योदयमिति । अत्र प्रसवदेशज्ञानोपदेशप्रकरणे स्थाननिर्देशः सर्वत्र प्रश्नस्थानादिपरीक्षया निरूपणीम् । अथ सलिले प्रसूतिरित्यत्र सलिलशब्देन सलिलसन्निधिरपि सूचितः ।

अथानेन श्लोकेन वर्षप्रश्ने वोच्यते । आप्योदयं जलराश्युदयं जलराशितः सम्पूर्णः पूर्वपक्षगतः समवेक्षते सम्यगवेक्षते सप्तमदृष्ट्या-वेक्षते । अथवा मेषूरणबन्धुलग्नगतो वा यदि भवति तदा सलिलविषया सूतिर्वक्तव्या । तथा च संहितायाम् ।

"वर्षप्रश्ने सलिलविषयं राशिमाश्रित्य चन्द्रो
लग्नं यातो भवति यदि वा केन्द्रगः शुक्लपक्षे ।

सौम्यैर्दृष्टः प्रचुरमुदकं पापदृष्टोऽल्पमम्भः
प्रावृट्काले सृजति न चिराच्चन्द्रभागैः समाप्ति ॥"

अथ जलविशेषचिन्तोपाय उच्यते । समवेक्षत इत्यनेन चन्द्रस्य सप्तमस्थिति-र्विज्ञायते । सप्तमस्थो वा मेषूरणबन्धुलग्नगो वा चन्द्रो जलसूचक इत्युक्तम् । तत्रायं विशेषोऽस्ति मेषूरणराशेरेकादशगतत्वाच्चन्द्रो वृष्टिसूचकः बन्धुस्थानस्य पातालगतत्वात्सर्वसाधारणजलसूचको भवति । तथा चोक्तम्-

"हिबुकेनाधः सलिलं नद्यागमनं तु सप्तमेनैव ।
दशमेन वृष्टिपतनं कूपादुदयेन तत्त्रितयम् ॥" इति।

ततः शशिनो जलजात्मकत्वाज्जलनिरूपणे जलात्मकः शुक्रोऽपि शशिवद्ग्राह्यः । आप्योदयमित्यत्राप्यशब्देन अम्मयं वस्तु गृह्यते । 'आप्यमम्मयम्' इति 'सिंहः' । आप्योदयं वस्तु दृश्यते जलपृच्छायां जल वाच्यम् । अनेनैव न्यायेनोक्तेषु समानेषु स्थलराशिष्वाग्नेयग्रहसहितेषु जलाभावा निरूपणीया इति ॥ ९ ॥

( वैतालीयम् )

उदयोडुपयोर्व्ययस्थिते गुप्त्यां पापनिरीक्षिते यमे ।
अलिकर्कियुते विलग्नगे सौरे शीतकरेक्षितेऽवटे ॥ १० ॥

उदयोडुपयोः लग्नचन्द्रयोः गुप्त्यां बन्धनागारे द्वादशे मन्दे वा पापदृष्टे गुप्त्यां न केवलं प्रसूतिः मष्टुर्बन्धोऽपि वाच्यः । रोगादीनां वा । तथा च कृष्णीये-

"होरा द्वादशराशौ षष्ठे वा भवति बन्धनं रविजे । " इति

अलिकर्कियुते मष्टुः कूपादिपातो बुधैरूह्य इत्यर्थः अलिकर्कियुते कुलीरवृश्चिक-योरवटे स्थितिर्लोके दृश्यते शनैश्चरस्य गूढनिवाससूचकत्वात्तदुदयेनापि सरीसृपा-त्मकस्य चन्द्रस्य दृष्ट्याप्यवटः ऊह्यः । एवं निरूपणप्रकारोऽप्यनेन सूचितः । एवमर्थमुत्तरश्लोकेन स्पष्टीकरोति ॥ १० ॥

( वैतालीयम् )

मन्देऽब्जगते विलग्नगे बुधसूर्येन्दुनिरीक्षिते क्रमात् ।
क्रीडाभवने सुरालये प्रवदेज्जन्म च सोषरावनौ ॥ ११ ॥

मन्देति । मन्दसहिते लग्ने राशिभेदात्केषांचिद्ग्रहाणामालोकनेन च विदेशस्थाने सूतिरूपदिश्यते । बुधादिदृष्ट्या क्रीडाभवनादयः स्थानविशेषाः ॥ ११ ॥

( उपजातिः )

नृलग्नगं प्रेक्ष्य कुजः श्मशाने
रम्ये सितेन्दू गुरुरग्निहोत्रे ।

रविर्नरेन्द्रामरगोकुलेषु
शिल्पालये ज्ञः प्रसवं करोति ॥ १२ ॥

नृलग्नगमिति ।नृलग्नगमित्यत्र मन्दगमिति विशेष्यपदं पूर्वश्लोके प्रस्तुतत्वात् 'कुजः श्मशाने इति कुजेन श्मशानस्थाननिर्णयः, सितेन्दुभ्यां विहारस्थाननिर्णयः, गुरुणा-ग्निहोत्रिग्रामग्निहोत्रगृहादौ चिन्त्या। रविणा देवागारराजगृहगोगृहाणि शिल्पवेश्मनि विधुजनिः अयं श्लोकः कर्माजीवनिरूपणेऽप्युपयुज्यते ॥ १२ ॥

( वैतालीयम् )

राश्यंशसमानगोचरे मार्गे जन्म चरे स्थिरे गृहे ।
स्वर्क्षांशगते स्वमन्दिरे बलयोगात्फलमंशकर्क्षयोः॥ १३ ॥

राश्यंशेति । शत्रुराशिगते ग्रहे लग्ने चेच्छत्रुगृहे मित्रराशिग्रहगते लग्ने च स्वगृहे उच्चराशिगते राजगृहे नीचराशिगते नीचगृहे इत्याद्यूह्यम् । अत्र स्वर्क्षांशगतत्वादि लग्नेशस्येति केचित् । कथमत्रांशराश्योर्विरोधे फलनिर्देश इति चेद्बलयोगा-द्राश्यंशयोर्यस्य बलाधिक्यं तस्य फलं वक्तव्यमिति सर्वत्र चिन्त्यम् । प्रथमश्लोके 'मेषाश्विप्रथमा नवर्क्षचरणा' इति । राश्यंशकयोः सह पाठं कृत्वा ग्रहांशका इति पुनरप्युक्तं तस्य प्रयोजनमिदमप्युक्तम् । 'बलयोगात्फल-मंशकर्क्षयोः' इति । 'वीर्यान्वितांशकपतिर्निरुणद्धि पूर्वं राशीश्वरस्य फलमंशफलं ददाति' इति वक्ष्यति । तस्मात्सर्वांशकनिरूपणं विना किंचित्फलं निर्णेतुं न शक्यते नीचारिभागे समवस्थितस्य शस्ते गृहे मित्रफलं प्रदिष्टं' इत्यत्र वक्ष्यति । तस्मान्न केवलं राशिमात्रज्ञानेन ॥ १३ ॥

( वैतालीयम् )

आरार्कजयोस्त्रिकोणगे
चन्द्रेऽस्ते च विसृज्यतेऽम्बया ।
दृष्टेऽमरराजमंत्रिणा
दीर्घायुः सुखभाक्च संस्मृतः ॥ १४ ॥

आरार्कजयोरिति । चन्द्रस्यार्कसहितत्वान्मौढ्यमभिप्रेतम् । चन्द्रे मूढे सति तत्रिकोणस्थयोरारार्कजयोर्मात्रा विमुज्यत इत्यर्थः । तथा च सारावल्याम्-

"कुजचन्द्रयोस्त्रिकोणे चन्द्रेऽस्तगते विमुज्यते मात्रा इति ।"

अथवारार्कजचन्द्राणां परस्परं त्रिकोणगता भवेद्यदि मात्रा विमुज्यत इत्यर्थः । बृहस्पतिदृष्टौ दियुक्तस्य जन्तोरायुः सुखं च भवति । मुज्यत इत्यनेन शिशोर्मातृ-

वियोग उक्त इति चेत् क्रूरर्क्षगतावशोभनावित्यादिश्लोकेन पितृविदेशगमनं पूर्वमवोक्तम्। तस्मादिह नोच्यते। अत्र चन्द्रग्रहणं दिवा सितस्याप्युपलक्षणार्थम् ॥१४॥

( वंसततिलका )

पापेक्षिते तुहिनगावुदये कुजेऽस्ते
त्यक्तो विनश्यति कुजार्कजयोस्तथाये ।
सौम्येपि पश्यति तथाविधहस्तमेति
सौम्येतरेषु परहस्तगतोप्यनायुः ॥ १५ ॥

पापेक्षित इति । पापेक्षिते त्यक्तो विनश्यति मातृदीक्षादिकं न करोति देशान्तरगतो वा दुष्टो वा मृतो वा भवतीत्यर्थः । सौम्येऽभिपश्यति तथाविधहस्तमेति इत्येतन्न केवलमेतद्विषयं सर्वत्र दृष्टग्रहवशाद्युद्धग्रहवशाद्वा कर्माजीवे कर्मस्थितवशाद्वा यत्फलप्राप्तिरुच्यते तत्फलस्य तादृशरूपत्वमूह्यम् । इत्यस्याभिद्योतकम् । तथा च । चन्द्रलग्नान्तरगतैर्ग्रहैः स्युरुपसूतिकानाम्'इत्यत्र चन्द्रलग्नान्तरगतग्रहवर्णवशादुपसूतिकानां जातिवर्णवयोरूपादयो वक्तव्याः । तथा निरूपणमनेनोक्तमित्यर्थः ॥ १५ ॥

( वैतालीयम् )

पितृमातृगृहेषु तद्बलात्तरुशालादिषु नीचगैः शुभैः ।
यदि नैकगतैस्तु वीक्षितौ लग्नेन्दू विजने प्रसूयते ॥ १६ ॥

पितृमातृगृहेष्विति । पितृमातृगृहेषु तद्बलात्पितृग्रहबलात्पितृगृहे मातृग्रहबलान्मातृगृहे पितृमातृग्रहौ दिवार्कशुक्रौ इत्यादिना उक्तोनवमेशो वा पितृग्रहश्चतुर्थको वा बलशब्देन योगदृष्टिश्चोच्यते । तत्तद्बलवशात्तरुशालादिषु नीचगैः शुभैस्तरुतटे वा । आदिशब्देन नदी च गृह्यते । प्राकारमूले वा अथवा दिवाकरेन्द्वोरित्यादिना द्योतितः । माता चन्द्रः पिता सूर्यस्तयोर्गृहास्तु-'सिंहः कन्या तुलाली च कुम्भान्त्यौ सूर्यराशयः' इत्युक्ता रश्मयः गोजाश्वीत्यादिना सिद्धाः सूर्यराशौ लग्नगते सति तदधिपं सूर्यराशिं गते जातस्य मातृसम्बन्धिनो धनबान्धवादयः । लग्नतदधिपयोरेकस्य सूर्यराशिगतत्वेऽन्यस्य चन्द्रराशिगतत्वे उभयसम्बन्धिनो धनबान्धवादयः लग्नतदीशयोर्बलसद्भावे पापदृष्टियोगाभावेऽपि जन्मकालात्प्रभृति गृहसम्पदित्यादि । नीचगैः शुभैरिति च भेषु सर्वेषु नीचराशिगतेषु च विशेषाः लग्नेशे नीचगते च तरुशालादिषु गृहधनाद्यभावात्तरुषु अर्थात्तवमे मार्गग्रहे वा मार्गे पतति वनचरवृत्त्या वा जीवति च । बलयोगात्फलमंशकर्षयोरित्युक्तत्वान्नीचादिगतत्वमंशकादपि निरूपणीयम् । यदि नैकगतैस्तु वीक्षि-

ताविति। एकराशिस्थैः सर्वग्रहैर्लग्नेन्दू न वीक्षितौ यदि विजने जनशून्ये अटव्यादिदेशे प्रसूयते। तथा च सारावल्याम्—

"नेक्षन्ते लग्नेन्दू यद्येकस्था ग्रहास्तथाटव्याम्।" इति।

अथ लग्नचन्द्रावेकग्रहेणापि न दृश्येते चेत्तदा विजने वर्तते असहायवान् वन्धुः स्वयमेव चलतीत्यर्थः। सह पितृमातृगृहेषु तद्वलात्तलशालादिषु नीचगैःशुभैः॥१६॥

( मन्दाक्रान्ता )

मन्दर्क्षांशे शशिनि हिबुके मन्दहृष्टेऽब्जगे वा
तद्युक्ते वा तमसि शयनं नीचसंस्थैश्च भूमौ।
यद्वद्राशिर्व्रजति हरिजं गर्भमोक्षश्च तद्व-
त्पापैश्चन्द्रात्स्मरसुखगतैः क्लेशमाहुर्जनन्या॥ १७॥

मन्दर्क्षांश इति। अस्य श्लोकस्य पूर्वार्धेन यत्र तमःप्रकाशौ जिज्ञास्येते तत्र तत्र तत्परिज्ञानमुपदिश्यते। जन्मनि भोजनप्रश्ने मैथुनप्रश्ने शयने चौर्यादौ चास्य विनियोगः।

मन्दराशौ तदंशे मन्दहृष्टे मन्दयोगे वा पातालस्थाने वा जलराशौ वा चन्द्रस्य स्थित्यान्धकारसद्भावः मन्दस्यासितत्वाद्धिबुकस्य पातलत्वाज्जलराशेर्जलमयत्वात्तमःसूचकत्वम्। शशिशब्देन लग्नराशिरपि सूच्यते। नीचसंस्थैश्च भूमावित्यनेन नष्टमुष्टिमन्दर्क्षांश इत्यादिना सूचितम्। अर्थान्तरमथोच्यते एवं भूते चन्द्रे जातस्य तमसि अज्ञानेन च वर्तनमित्यर्थः। नीचसंस्थैर्ग्रहैर्भूमौ शयनं नोर्ध्वशयन शयनसाधनमपि न वर्तते दारिद्र इत्यर्थः। एवं चन्द्रार्कगुरुलग्नैर्ग्रहैर्विशेषो निरूपणीयः द्रव्यस्थानपरिज्ञाने तु लग्नांशे नीचगते लग्ने नीचस्थग्रहदृष्टे युते वा भूमिषु द्रव्यमित्यादि। अथ यद्वद्राशिरित्यादि लग्नराशिर्यद्वद्धरितं व्रजति गर्भमोक्षस्तु तद्वत्। तुशब्दो हेतुविनिवृत्तिपक्षान्तरपरिग्रहेषु प्रयुज्यते। अत्र पक्षान्तरे प्रयुक्तः। गर्भमोक्षे गर्भद्रव्याणां मोक्षो गर्भमोक्षः स तूर्ध्वमुखाधोमुखतिर्यङ्मुखराशिवशात्तथा च तद्विभागः।

"ऊर्ध्वमुखो रविमुक्तो रवियुक्तस्त्वधोमुखो ज्ञेयः।
अभिलषितस्तिर्यक् सा तेषां केन्द्रं च तत्संज्ञम्॥" इति।

ऊर्ध्वमुखे लग्ने कुसूलादेर्ग्रहस्य चोर्ध्वभागं विभिद्य चौरो द्रव्यमाहृतवान्। अधोमुखे सति अधोभागं तिर्यङ्मुखे पार्श्वभागमिति वक्तव्यम्। 'पापैश्चन्द्रात्स्मरसुखगतैः' इत्यादि पूर्वमथमाध्याये। शशिशुक्रौ युवतीति 'बीजक्षेत्रवपुः' पुनर्निषेकाध्याये दिवाकरेन्द्वोरित्यत्राङ्कुरोत्पत्तिः। स्वाम्यस्यीत्यादिना शुक्रस्य शुक्लामपत्यकथने

पल्लवोद्भवः शौक्रगीतरतीत्यादौ फलत्वम् । एवं सर्वत्र पूर्वापरनियुक्तया निरूपणीयः। पूर्वं दिवाकरेन्द्वोरित्यादिना चन्द्रस्य पापदृष्ट्या जननीव्यसनं भवतीत्युक्तम् । न केवलमेतावता 'चन्द्रात्स्मरसुखगतैः पापैरपि जननीक्लेशमाहुः'इत्यनेन चन्द्रस्य मातृकारकत्वप्रसिद्धिः सूचिता शुक्राच्च भार्यारोगः लग्नात्स्मरसुखगतैश्च भार्यामात्रो रोगादि वदेत् । तद्विग्रहो वा तथा चार्यासप्तशतौ-

"चन्द्रे पापसमेते भृगुजे वा विग्रहः सह स्त्रीभिः ।
वक्तव्यो द्यूनगतैः पापैः सुखसंस्थितैस्तद्वत् ॥" इति ॥ १७ ॥

( इन्द्रवज्रा )

स्नेहः शशांकादुदयाच्च वर्ति-
र्दीपोऽर्कयुक्तर्क्षवशाच्चराद्यः ।
द्वारं च तद्वास्तुनि केन्द्रसंस्थै-
र्ज्ञेयं ग्रहैर्वीर्यसमन्वितैर्वा ॥ १८ ॥

स्नेहेति । तत्र चन्द्रलग्नादित्यैर्दीपलक्षणमुच्यते । शशांकस्य बलपुष्टौ तैलगुणः । लग्नवशाभावाद्वर्तिगुणः। अर्कवशाज्ज्वालागुणः। अर्कयुक्तवशाद्दीपभाजनगुणः । अर्कचन्द्रलग्नानामानुकूल्ये बलवत्त्वे च जन्मकालः प्रसन्नो भवतीति ज्ञातव्यम् । लग्नार्कचन्द्राणामानुकूल्ये बलवत्त्वे च जातो जीवत्प्रज्वलिततेजो भवति । आदित्यस्तावदात्मामनश्चन्द्रः लग्नं शरीरमेभिस्त्रिभिरेव सकलशुभाशुभं निरूप्यते। एतेत्रयोऽप्यनकूलाश्चेत्पुरुषस्य साम्राज्यसामग्री भवति । अन्ये ग्रहास्त्वेतद्वशगा एवेति । पुरुषस्य दीपतुल्यत्वं लग्नवशादेहगुणो दीपोऽर्कयुक्तर्क्षवशादित्यनेनात्मनो दीपज्वालातुल्यत्वे अर्कवशादात्मप्रभावादयः । 'दीपः संहतमूर्तिरायततनुरित्यर्थान्तरपि निरूपणीयम्। इह तु लग्नार्कचन्द्रवशाद्दीपप्रसादकथनेन प्रश्नादौ विवाहादिकर्मसु दीपप्रसादे दृष्टे सति भविष्यत्फलं दीपवशाच्चिन्त्यम् । तथा च बृहत्संहितायाम्-

"दीपः संहतमूर्तिरायततनुर्निर्वेपथुर्दीप्तिमा-
न्निःशब्दो रुचिरः प्रदक्षिणगतिर्वैडूर्यहेमद्युतिः ।
लक्ष्मीं क्षिप्रमभिव्यनक्ति रुचिरां यश्चोच्छ्रितो दृश्यते।
शेषं लक्षणमस्ति लक्षणसमं योज्यं यथायुक्तितः ॥"
"वामावर्तो मलिनकिरणः सस्फुलिङ्गोऽल्पमूर्तिः
क्षिप्रं नाशं व्रजति विमलः स्नेहवर्त्यान्वितोऽपि ॥
दीपःपापं कथयति फलं शब्दवान्वेपथुश्च
व्यादीर्णार्चिर्विमलमसकृद्यश्च नाशं प्रयाति ॥" इति ।

अर्कयुक्तर्क्षवशादित्यत्राहोरात्रेऽर्कस्याष्टासु दिक्षु परिभ्रमणमस्ति तथा चोक्तम्–
"यामार्धमुदयात्पूर्वमारभ्याष्टासु दिक्षु च ।
परिभ्रमति शीतांशुर्यामैश्चाष्टासु सर्वदा ॥"

अत्र सार्द्धं सप्तनाड्यायामः। अनेन विधिना द्वादशराशिषु परिभ्रमणमवगंतव्यम्। कथमिति चेदुच्यते। प्राच्यादिग्रहे क्रियादय इत्युक्तविधिना सूतिकागृहं द्वादशधा विभज्य मेषादिषु कल्पितेषूदयात्पूर्वं पादोनचतुर्नाडिकाकालादारभ्यैकैकस्मिन्राशौ पञ्चसु नाडिकासु प्रादक्षिण्येन रविस्थितिरवगन्तव्या। अनेन विधिना यत्र जन्मकाले तद्राशौ दीपस्थितिस्तद्राशेश्चरादित्वेन दीपभाजनस्य चरादित्वमित्यर्थान्तरमपि श्रूयते। 'द्वारं च तद्वास्तुनि' इत्यादि। केन्द्रसंस्थै राशिभिर्बलवद्भिरथवा केन्द्रसंस्थैर्ग्रहैर्वा ग्रहस्य या दिक् तस्यां दिशि द्वारमवगन्तव्यम्। तत्रोर्ध्वमुखादिभिः राशिभिरूर्ध्वमध्याधोभागं द्वारमवगन्तव्यमिति। अर्थान्तरमुच्यते। केन्द्रसंस्थैर्द्वारमवगंतव्यं सर्वफलानामवगमद्वारमित्यर्थः। केन्द्रसंस्थैर्ग्रहैरिति। प्रश्नजन्मादौ शुभाशुभफलं निरूपणीयम्। तथा च वसिष्ठः।

"अपृच्छतः पृच्छतो वा जिज्ञासोर्यस्य कस्यचित्।
होराकेन्द्रत्रिकोणेभ्यः शुभाशुभफलं वदेत् ॥" इति।

तद्वास्तुनि तत्तद्राशौ भावभूते तस्य केन्द्रस्य गतैर्ग्रहैस्तद्भावसम्पद्विपत्ती निरूप्येते। तथाच विद्वज्जनवल्लभाख्ये–

"आरोग्यस्य प्राप्तिमर्थस्य लाभं वा दौर्जित्यं सङ्गमं च प्रियेण।
सौम्याः केन्द्रस्थायिनः खेचरेन्द्राः कुर्वन्त्यन्योऽप्यन्यथा सर्वमेतत् ॥"

तथानेनोक्तं नष्टजातके।

"एवं कलत्रसहजात्मजशत्रुभेभ्यः।
प्रष्टुर्वदेदुदयराशिवशेन तेषाम् ॥ १८ ॥"

(शार्दूलविक्रीडितम्)

जीर्णं संस्कृतमर्कजे क्षितिसुते दग्धं नवं शीतगौ
काष्ठाढ्यं न दृढं रवौ शशिसुते तन्नैकशिल्प्युद्भवम्।
रम्यं चित्रयुतं नवं च भृगुजे जीवे दृढं मन्दिरं–
चक्रस्थैश्च यथोपदेशरचनां सामन्तपूर्वां वदेत् ॥ १९ ॥

जीर्णमिति। भाजनगृहं वा प्रोषितगृहं वा शयनगृहं वा सर्वत्र कीदृशं गृहमिति निरूपणे अनेन श्लोकेन तन्निर्णीयते। जीर्णं संस्कृतमिति। जीर्णं करीषादिरूपितं संस्कृतं वाहनगोशालेत्यभिप्रायः मन्दस्य तत्क्षेत्रम्। दग्धं सर्वदाग्निसन्निधानाद्दग्धं

स्थलं पाकशालेत्यर्थः तद्गृहं क्षितिजस्य । नवमभिनवं रमणीयं दिव्यमत्याकृतं तचन्द्रस्य । काष्ठाढ्यमदृढं रवौ काष्ठाढ्यमिन्धनाश्रितं तद्गृहं सूर्यस्य । अनेकशिल्पयुद्भवमनेकशिल्पिभिः उद्भवो यस्य तद्गृहं शशिसुतस्य । रम्यं चित्रयुतं नवं च चशब्देन जीर्णमपि गृह्यते शुक्रस्य । फलपौष्कल्येऽभिनवं बलहानौ जीर्णं पुराणमिति शेषः । दृढमविरतं वेदशास्त्राध्ययनात् संस्कृतं दृढमित्युक्तत्वात् । तथाच कृष्णाचार्यः–

"भौमस्य पाकशालां विन्द्यान्नवं गृहं वदन्ति गुरोः ।
सौम्यस्यालेख्यगृहं सवितुरपि च पाकशालायाः ॥
इन्दोर्वेश्म तु दिव्यं दैत्यगुरोर्जीर्णमुच्यते वेश्म ।
गोशाला रविसूनो राहोर्वल्मीकालयं ब्रुवते ॥" इति ।

केन ग्रहेण गृहं निर्णीयते इति चेदुच्यते–केन्द्रस्थैर्वीर्यग्रहैर्बलीयसमन्वितैरिति । पूर्वश्लोकोक्तमत्रापि ग्राह्यम् । केन्द्रेषु बहुषु लग्नस्थग्रहेणेति । कस्य न प्रतिभाति तदभावे सप्तमग्रहेण लग्नं पश्यता अथवा हिबुकमम्बुसुखं च वेश्मेतिवचनाच्चतुर्थग्रहेण तत्स्थानमम्बरगतेन तेन वा तथा केन्द्रगेषु बलवता ग्रहेण गृहकथनं केन्द्रग्रहरहिते राशिभिरिति । केवलं भवननिरूपणमनेनार्थान्तरमपि सूचितम् । अन्यद्रव्यादिकृतिरपि चिन्त्या । जीर्णं परिणतं संस्कृतमग्न्यादिसंस्कृतं धान्यधात्वादिमूलं चेद्वातशुष्कमग्निदग्धं वा धात्वादिदग्धैकदेशं मूलं नवं शीतगौ । इदानींतनं काष्ठाढ्यमदृढं रवाविति काष्ठाढ्यं वरविटपविमूलं वा न दृढं धातुद्रव्यं वा शशिसुते शिल्पयुद्भवमनेकशिल्पान्वितं रम्यं नयनसुभगं नवं च भृगुजस्य जीवे गृहं दिव्याद्याकृतिरपि सूचितेति । सर्वत्र ग्रहनिरूपणे ग्रहस्योच्चगतत्वे देवगृहं राजगृहं वा । स्वक्षेत्रगतत्वे स्वगृहत्वात्तन्नीचगतत्वे अधमम् । मित्रगतत्वे मित्रगृहं शत्रुगतत्वे तथा । अस्मिन् गेहे निधनधान्याद्यपि चिन्त्यं शत्रुगृहमुख्यम् । एतत्स्वर्क्षांशगतत्वे स्वमन्दिरे इति वचनादूह्यते । विप्रादित इत्यादिवर्णविशेषादिग्रहविशेषश्चिन्त्यः । अथास्मिन् गेहे निधिधनधान्याद्यपि चिन्त्यं तदपि पूर्वश्लोकोदितमेव द्वारं तु तद्वास्तुनीत्यत्र तुशब्देन केन्द्रसंस्थग्रहैस्तद्वास्तुनि वस्तुविशेषश्चिन्त्यते । तथाच कृष्णीये–

"यदि केन्द्रगताः सौम्या एकादशेऽपि वा नियतगृहे ।
कुर्युर्धनवद्गेहं द्वारं वा स्यादिशि प्रोक्तम् ॥" इति ।

अस्य श्लोकस्यायमर्थः उक्तेषु स्थानेषु प्राच्यादिगते सौम्यग्रहे चेन्निधिर्विबलश्चेदूनद्रव्यमित्याशयम् । ग्रहस्योक्तं धातुमूलादिचिन्त्यम् । चक्रस्थैरित्यादि तद्वास्तुनि स्थिरचरं वान्यविरोधैर्ग्रहैरुक्तान् ग्रहान्वदेत् कीदृशान्सामन्तपर्यान्समन्ततो भूताः सामन्ता

ग्रहास्ते पूर्वा येषाम् अन्येषां ग्रहाणां तान्वदेत् यथोपदेशचरणाच्चीर्णं संस्कृतमित्याशयम् । उक्तलक्षणादेवाम्व्यमीत्याद्युदितान्ग्रहानपि वदेत् ॥ १९ ॥

( दोधकम् )

मेषकुलीरतुलालिघटैः प्रा-
गुत्तरतो गुरुसौम्यगृहेषु ।
पश्चिमतश्च वृषेण निवासो
दक्षिणभागकरौ मृगसिंहौ ॥ २० ॥

मेषकुलीरेति । केषुचिद्देशेषु दिग्विभागोऽनेन ज्ञातव्यः । अत्र मेषे कुलीराद्यंशका बलिष्ठाश्चिन्त्याः ॥ २० ॥

( वैतालीयम् )

प्राच्यादिगृहे क्रियादयो
द्वौ द्वौ कोणगता द्विमूर्तयः ।
शय्यास्वपि वास्तुवद्वदे-
त्पादैः षट्त्रिनवत्यसंस्थितैः ॥ २१ ॥

प्राच्यादीति । अनेन केवलं सूतिकागृहपरिज्ञानं हृतनष्टादिषु मैथुनादिषु च गृहविज्ञानं भवितव्यम् । तस्मिन् गतद्रव्यमप्यनेन विज्ञायते यस्मिन्भागे सौम्यो गृहेषु तद्द्रव्यमादिशेत्तत्र यस्मिन्भागे पापस्तस्मिन् शल्यं विनिर्देश्यमिति अनेन विधिना भूचक्रं रचनाकृतं तत्र सौम्यग्रह उपतिष्ठते तस्य सौम्यग्रहस्योक्तं द्रव्यं तत्र भवति धातुमूलचिन्तायामुक्तम् । यस्मिन्भागे पापग्रहस्तत्र शल्यम् । तथा च कृष्णीये–

"यस्मिन्भागे सौम्यो गृहेषु तद्द्रव्यमादिशेत्तत्र ।
यस्मिन्भागे पापस्तत्र शल्यं विनिर्देश्यम् ॥" इति ।

अनेन भूचक्ररचनं चोक्तम् । प्राच्यां दिशि मेषवृषौ । आग्नेय्यां दिशि मिथुनम् । कर्किसिंहौ दक्षिणस्याम् । नैर्ऋत्यां कन्यका । तुलासरीसृपौ पश्चिमायाम् । धनुर्वायव्याम् । मकरकुम्भावुदीच्याम् । मीन ऐशान्याम् । एते राशयःस्वादिशि व्याप्ताः । अनेन विधिना यस्मिन्राशौ संस्थितः प्रष्टा पृच्छति स आरूढ इति प्रसिद्धिः । तस्य दुरवगम्यत्वाद्भूमौ राशिचक्रमालिख्य प्रष्टा यं राशिं स्वर्णफलादिना स्पृशति स आरूढ इति परिकल्पनात्तस्मात्प्रष्टा आरूढविदितत्वे तेन फलं चिन्तनीयं तस्याविदितत्वे स्वर्णफलादिना स्पृष्टेनारूढतया कल्पितेन इति प्रश्नादावनेनोपयोगः ।

शय्यास्वपीत्यादि । अनेन खट्वालक्षणमुच्यते । शय्यासनस्य पुरुषस्य खट्वाया यस्मिन्भागे शिरस्तत्र लग्नद्वितीयराशिस्तृतीयराशिः पुरस्ताद्दक्षिणभागाच्चतुर्थः पश्चिमराशिर्दक्षिणभागे षष्ठःपश्चाद्भागे दक्षिणभागः सप्तमाष्टमौ पश्चिमभागे नवमः पश्चाद्भागे वामपादः । दशमैकादशौ उत्तरभागे द्वादशः पूर्वभागे वामपादः। एवं यानि यानि चतुरस्रवस्तूनि तेषुतेषु राशिभिरनेन विधिनावयवविभागं कृत्वा लक्षणानि कथयेत् । खट्वाचिह्नानि अवयवभूतराशिस्थग्रहतुल्यानि शुभदृष्टिवशादास्तरणविशेषश्चिन्त्यः ।

वस्त्रं स्थूलमभुक्तमित्यादिविधिना दृष्टग्रहकृतवस्त्रमास्तरणं वदेत् । तथा च सारावल्याम् ।

"स्थितभवनोपर्युचितैर्विहगैः समानि तत्र चिह्नानि ।
आस्तरणानि च विन्द्याच्छुभदृष्टकृतानि दैवज्ञः ॥
प्राच्यादिगृहद्वितयं विलग्नतो राशिसमगात्रम् ।
आशानिश्चयनं ग्रहतुल्यं वास्तोर्यथा लक्ष्म ॥"

इत्यनेनार्थान्तरमपि सूच्यते । स्वगृहाश्रयभूमिः प्राच्यादिग्रहन्यासेन राशयो लग्नादयः कल्प्यन्ते । राशिभिस्तत्रस्थैर्ग्रहैर्वृक्षादयो मूलचिन्तायामुक्तानि मूलानि केन्द्रगतैर्बलवद्भिर्ग्रहैर्वाच्यानीत्यादि चिन्त्यम् ॥ २१ ॥

( अनुष्टुप् )

चन्द्रलग्नान्तरगतैर्ग्रहैः स्युरुपसूतिकाः ।
बहिरन्तश्च चक्रार्द्धे दृश्यादृश्येऽन्यथापरे ॥ २२ ॥

चन्द्रलग्नान्तरगतैरिति । लग्नादारभ्य चन्द्रस्थितस्थानराशयस्तेषु स्थितग्रहैरुपसूतिकाः । सूतिकासमीपस्थाः स्त्रियो वाच्याः । ग्रहैरित्यस्यायमर्थःलक्षणरूपविभूषणवयोवर्णगुणस्वभावादयो ग्रहैस्तुल्या इति । तथा च सारावल्याम्-

"लक्षणरूपविभूषणयोगस्तासां शुभाशुभग्रहवशात् ।
क्रूरैर्विरूपदेहा लक्षणहीना सुमलिनाश्च ॥"

तासां दृश्यार्धगतैर्ग्रहैर्बहिःस्थितत्वमदृश्यार्धस्थितैरन्तःस्थितत्वं च वक्तव्यम् । अन्यथा परे दृश्यार्धगतैरन्तःस्थितत्वमदृश्यार्धगतैर्बहिः स्थितत्वं च वदन्ति । बहिर्भागः खलु प्रकाशते । फलत्रस्थानं खलु दृश्यत्वात्तस्माद्दृश्यार्धगतैर्ग्रहैस्तासां बहिःस्थितिरुच्यते इति ।

अर्थान्तरमुच्यते । चन्द्रलग्नयोरन्तर्गतैर्ग्रहैश्चन्द्रे लग्ने चान्तरमन्तर्भूतं गतं प्राप्तिर्येषां तैः चिताश्चन्द्रलग्नसंयुतैरित्य[illegible]ः । उपसूतिकाः सहाया विज्ञातव्याः । एत-

दुक्तं भवति । चन्द्रलग्नौ क्रूरग्रहयुतेक्षितौ चेत्क्रूरौ मूर्खान्यकाः सहायाः । शुभग्रहयुतेक्षितौ चेत्सौम्याः । मिश्रग्रहयुतेक्षितौ चेन्मिश्रकृतयः । अस्य विधेयव्याप्तिर्विज्ञेया बहिरन्तर्भागौ विज्ञास्येते । तत्रानेन तत्सिद्धिः । लग्नाधिपे दृश्यभागगते प्रकाशग्रहयुते दृष्टे आस्थानवासी । अदृश्यभागस्थे गूढनिवासी । धनेशे तादृशे च गूढधनः । प्रकाशितधन इत्यादि । कलत्रेशे तादृशे गूढकामः । प्रकाशितकामश्चेत्यादि जन्मनि प्रश्ने च ॥ २२ ॥

(दोधकम्)

लग्ननवांशपतुल्यतनुः स्याद्वीर्ययुतग्रहतुल्यतनुर्वा ।
चन्द्रसमेतनवांशपवर्णः कादिविलग्नविभक्तभगात्रः ॥ २३ ॥

लग्नेति । लग्ननवांशपतुल्यतनुर्लग्नवांशो हि सूक्ष्मशरीरं तस्मात्तदधिपैः शुभत्वं सुस्थत्वं बलवत्त्वं च निरूप्यायुश्चिन्त्यम । लग्नस्य नवांशकस्य वा बलवतोर्योऽधिपस्ततुल्यतनुः स्यात्तस्य शुभत्वे बलवत्त्वे सुस्थत्वे पापगुलिकादियोगदृष्टिरहितत्वे च शरीरस्य शुभत्वमन्यथाऽशुभत्वं च निरूपणीयम् । ननु च होरादयस्तनुकुटुम्बेत्यादिना लग्नस्य शरीरत्वं नवांशकस्य प्राणात्मकत्वम् । उपदेशदशा चोक्ता तस्माल्लग्नवांशपतुल्यतनुरिति वक्तव्यम् । नैवं राशीनां तावज्जडत्वं ग्रहाणां तु शक्तिमत्त्वं न ग्रहान्विना राशीनां फलदानशक्तिः तथाच सारावल्याम्—

"भावाधिपैः समस्तं जातकविहितं विचिन्तयेन्मतिमान् ।
एभिर्विना न शक्यं पदवीं गन्तुं महाशास्त्रे ॥ " इति ।

लग्ने बलवान्ग्रहश्चेत्तत्तुल्यतनुश्चन्द्रयुक्तनवांशपवर्णश्चन्द्रस्य नवांशवशादपि फलं चिंत्यम्। तत्र लग्नचन्द्राभ्यामुभाभ्यामपि संलग्नतुल्यतामसिद्धचर्यमुपमानतयाधिक्योक्तिः । तत्रापि फलमधिकमिदं यदत्र भावाज्जायते तत्स्थानदृष्टिफलदाधिकं भवति । स्थानफलभावफलयोर्विरोधे भावफलस्याधिक्यमित्यर्थः । तत्रापि बलवशादुत्कर्षापकर्षौ विधेते । जन्मकाले जीवे लग्नगते विद्वानिति भावफलमुक्तम् । 'समुपचयविपत्तिःसौम्यपापेषु सत्स्वःकथयति' इत्यादिना देहपुष्टिश्च गते स्याच्चतत्सर्वं बलवशादेव जातस्य भवति 'सुहृदरिपरकीयःस्वर्क्षतुङ्गस्थितानाम्' इत्याचार्यः स्वयमेव वक्ष्यति । तस्माद्बलवशाद्यथोक्तं भवति तत्राप्ययं विशेषो यस्मिन् ग्रहे लग्नगते यत्फलमुक्तं तद्ग्रहस्थितराश्यधिपत्योर्बलविवेक एव सम्यग्भवति । तदत्र भवनभनाथगुणैः वृत्तान्ताग्रहगित्यादिभिः सह विचिन्तनीयम् । अत्र पुत्रभावस्योदाह्रियते । पुत्रभावस्थित-'लग्नात्पुत्रकलत्रभे शुभपतिप्राप्तेऽथवालोकिते' इत्यादिना पुत्रासिद्धिः परिकल्पनीया। तत्रायं भवनभनाथगुणैर्विशेषः पुत्रस्थानं मेषश्चेन्मेषस्य भवनस्य तन्नाथस्य कुजस्य च ये स्वभावास्तैर्युक्ताः पुत्रा भवन्ति ।

वृत्तातामदृगित्यत्र वृत्ताउष्णशाकलघुभुक्त्वमटनत्वं कामित्वा दुर्बलजानुत्वं च तोये भीरुत्वं व्रणाङ्कितशिरस्त्वं मेषस्वभावाः । अन्ये कुजस्वभावाः । एवं राशितन्नाथस्वभावयुक्तं सर्वभावफलं निरूपणीयम् । पुनरपि विशेषोऽस्तिपुत्रस्थानं युग्मराशिरधिपतिश्च स्त्रीग्रहो द्रष्टा च स्त्रीग्रहश्चेत्स्त्रीप्रजासिद्धिर्वक्तव्या । तथाच सारावल्याम्-

"सितशशिवर्गे जलाभावात्" अत्र पुत्रादिलब्धिरुच्यते ।

तथा च सारावल्याम्-

"मान्दे सुतर्क्षमिन्दुर्निरीक्षिते यदि शनैश्चरेण युता ।
दत्तकपुत्रोत्पत्तिः क्लीबस्य बुधस्य चैवं स्यात् ॥
पुनराधिपतिनावस्थितराशौ यावन्तो भुक्तांशाः ।
यावन्तो भुक्तांशास्तावन्तः पुत्रकास्तु तावन्तः ॥
ईशवशेन विदध्यात्पुंस्त्रीवृद्धिक्षयादींश्च ।"

इत्यत्र संख्याकरणविधिवियोनिजन्माध्यायोक्तमेव सर्वभावानां फलं भवनभनाथगुणैर्विचिन्तनीयम्, एवं चन्द्रलग्नाभ्यामारभ्य सर्वभावा लग्नवांशपतुल्यतनुः स्यादित्यादिन निरूपणीयाः । प्रश्ने तु लग्नांशकेशानां गुणदोषवशात्स्पष्टः शुभाशुभौ विचिन्तनीयौ इति । कादिविलग्नविभक्तभगात्र इति । भैर्निष्पादितभगात्रः कादिविलग्नादिश्च विभक्तभगात्रा यस्यासौ कादिविलग्नविभक्तभगात्रः । कालाङ्गानीत्यादि विधिना मेषादिराशिस्थानेषु लग्नादिराशीन् कल्पयित्वा तेषु शुभाशुभग्रहदृष्टियोगवशादवयवानां शुभाशुभत्वं निरूपणीयम् ।

प्रश्नादौ रोगस्य स्थानं निरूपणीयमित्यनेन श्लोकेन भूमिष्ठं प्रश्ननिरूपणप्रकारमुपकारं चोक्तवान् वृषणावूरू ततो जानुनी जङ्घांघ्रीत्युभयत्र वाममुदितैर्द्रेष्काणभागैस्त्रिधेति ॥ २३ ॥

( शार्दूलविक्रीडितम् )

कं दृक्छ्रोत्रनसापकपोलहनवो वक्त्रं च होरादय
स्नेकंठांसकबाहुपार्श्वहृदयक्रोडानि नाभिस्ततः ।
वस्तिः शिश्नगुदे ततश्च वृषणावूरू ततो जानुनी
जंघांघ्रीत्युभयत्र वाममुदितैर्द्रेष्काणभागैस्त्रिधा ॥ २४ ॥

कमिति । कं दृगित्यादिना षट्त्रिंशत्स्थानान्युक्तानि-लग्ने प्रथमद्रेष्काणे उदयातिकादिदन्त्यानि द्वादशस्थानानि । द्वितीयद्रेष्काणे पद्यादीनां स्थानानि । अन्यैः अन्यानि । एवं द्रेष्काणभागैस्त्रिधा देहराशिस्थानान्यवगन्तव्यानि । एवं कल्पिते यत्र शुभग्रहा यत्र पापग्रहास्तैर्लक्षणानि कथयेत् । अत्रापमुपदेशोऽवगन्तव्यः । लग्ने

प्रथमद्रेष्काणे ग्रहाश्च स्वावस्थितराशौ प्रथमद्रेष्काणगाश्चेत्फलं निरूपणीयम्। अन्यथा लक्षणान्तरैः संवादश्चिन्त्यः। अयं विधिर्जन्मनि प्रश्ने चोपयुज्यते ॥ २४ ॥

( शार्दूलविक्रीडितम् )

तस्मिन्पापयुते व्रणं शुभयुते दृष्टे च लक्ष्मादिशे-
त्स्वर्क्षांशे स्थिरसंयुतेषु सहजः स्यादन्यथागन्तुकः।
मन्देऽश्मानिलजोऽग्निशस्त्रविषजो भौमे बुधे भूभवः
सूर्ये काष्ठचतुष्पदेषु हिमगौ शृंग्यब्जजोन्यैः शुभम् ॥ २५ ॥

तस्मिन्निति। तस्मिन् कादिविलग्नविभक्तभगात्रे कं दृगित्यादिकल्पिते चायं विधिः प्रश्नजातके चिन्त्यम्। मन्देऽश्मानिलज इत्यस्याऽश्मजोऽनिलजो वेति विशेषः ग्रहावस्थितराशिवशाद्वा दृष्टग्रहवशाद्वा कल्पनीयः। रोगप्रश्ने तस्मिन्नङ्गे रोगा वक्तव्याः ॥ २५ ॥

( हरिणीवृत्तम् )

समनुपतिता यस्मिन्भागे त्रयः सबुधा ग्रहा
भवति नियमात्तस्यावाप्तिः शुभेष्वशुभेषु वा।
व्रणकृदशुभः षष्ठो देहे तनोर्भसमाश्रिते
तिलकमसकृद्दृष्टः सौम्यैर्युतश्च स लक्ष्मवान् ॥ २६ ॥

इति श्रीवराहमिहिराचार्यकृते बृहज्जातके जन्मविधिर्नाम
पञ्चमोऽध्यायः ॥ ५ ॥

समनुपतिता इति। यस्मिन्गात्रे कालाङ्गानि वराङ्गमित्यादिना कादिविलग्नविभक्त भगात्र इत्यनेन कन्दृगित्यादिना च भौमस्य शिरो, बुधस्य मुखमित्यादिभिः राशिभिरधिपतीनां स्थानविधिना च त्रयो ग्रहास्त्रिभिर्लक्षणैः समनुपतिताः। बुधस्याश्रयवशात्फलमिति द्योतयितुं सबुधा इत्युक्तं तत्तदङ्गेशुभाश्चेदशुभेष्ववाप्तिः त्रिभिर्लक्षणैः संवादो जायते चेन्नियमेन शुभाशुभफलं वक्तव्यमित्यर्थः।

व्रणकृदशुभ इति लग्नादारूढाद्वा षष्ठस्थानं रोगस्थानं तत्राशुभग्रहश्चेद्रोगो भवति। तथाच कृष्णार्षे-

"ये क्रूराः षष्ठे लग्नात्स्वाङ्गविभागे वैकल्यम्।
केन्द्रत्रिकोणराशिषु न स्युर्गुरुसौम्यभृगुपुत्राः ॥ "

सर्वत्र दोषप्रदस्य ग्रहस्य शुभदृष्टौ दोषस्य न्यूनत्वं शुभप्रदस्य ग्रहस्याशुभदृष्टौ शुभस्यापि न्यूनत्वं भवतीति सिद्धं भवति ॥ २६ ॥

इति श्रीबृहज्जातके होराशास्त्रे दशाध्यायीटीकायां पञ्चमोऽध्यायः ॥ ५ ॥

वृत्ताताम्रदृगित्यत्र वृत्ताउष्णशाकंलघुभुक्त्वमटनत्वं कामित्वा दुर्बलजानुत्वं च तोये भीरुत्वं व्रणाङ्कितशिरस्त्वं मेषस्वभावाः । अन्ये कुजस्वभावाः । एवं राशितन्नाथस्वभावयुक्तं सर्वभावफलं निरूपणीयम् ।पुनरपि ।विशेषोऽस्तिपुत्रस्थानं युग्मराशिरंधिपतिश्च स्त्रीग्रहो दृष्टा च स्त्रीग्रहश्चेत्स्त्रीप्रजासिद्धिर्वक्तव्या । तथाच सारावल्याम्-

"सितशशिवर्गे जलाभावात्" अत्र पुत्रादिलब्धिरुच्यते ।

तथा च सारावल्याम्-

"मान्दं सुतर्क्षमिन्दुर्निरीक्षिते यदि शनैश्चरेण युता ।
दत्तकपुत्रोत्पत्तिः क्लीबस्य बुधस्य चैवं स्यात् ॥
पुनराधिपतिनावस्थितराशौ यावन्तो भुक्तांशाः ।
यावन्तो भुक्तांशास्तावन्तः पुत्रकास्तु तावन्तः ॥
ईशवशेन विदध्यात्पुंस्त्रीवृद्धिक्षयादींश्च ।"

इत्यत्र संख्याकरणविधिवियोनिजन्माध्यायोक्तमेव सर्वभावानां फलं भवनभनाथगुणैर्विचिन्तनीयम्, एवं चन्द्रलग्नाभ्यामारभ्य सर्वभावा लग्ननवांशपतुल्यतनुः स्यादित्यादिन निरूपणीयाः । प्रश्ने तु लग्नांशकेशानां गुणदोषवशात्प्रष्टुः शुभाशुभौ विचिन्तनीयौ इति । कादिविलग्नविभक्तभगात्र इति । भैर्निष्पादितभगात्रः कादिविलग्नादिश्च विभक्तभगात्रा यस्यासौ कादिविलग्नविभक्तभगात्रः । कालाङ्गानीत्यादि विधिना मेषादिराशिस्थानेषु लग्नादिराशीन् कल्पयित्वा तेषु शुभाशुभग्रहदृष्टियोगवशादवयवानां शुभाशुभत्वं निरूपणीयम् ।

प्रश्नादौ रोगस्य स्थानं निरूपणीयमित्यनेन श्लोकेन भूमिष्ठं प्रश्ननिरूपणप्रकारमुपकारं चोक्तवान् वृषणावूरू ततो जानुनी जङ्घांघ्रीत्युभयत्र वाममुदितैर्द्रेष्काणभागैस्त्रिधेति ॥ २३ ॥

( शार्दूलविक्रीडितम् )

कं दृक्छ्रोत्रनसापकपोलहनवो वक्त्रं च होरादय
स्तेकंठांसकबाहुपार्श्वहृदयक्रोडानि नाभिस्ततः ।
वस्तिः शिश्नगुदे ततश्च वृषणावूरू ततो जानुनी
जंघांघ्रीत्युभयत्र वाममुदितैर्द्रेष्काणभागैस्त्रिधा ॥ २४ ॥

कमिति । कं दृगित्यादिना षट्त्रिंशत्स्थानान्युक्तानि-लग्ने प्रथमद्रेष्काणे उदयतिकादिहन्वन्तानि द्वादशस्थानानि । द्वितीयद्रेष्काणे पष्ठादीनां स्थानानि । अन्यैः अन्यानि । एवं द्रेष्काणभागैस्त्रिधा देहराशिस्थानान्यवगन्तव्यानि । एवं कल्पिते यत्र शुभग्रहा यत्र पापग्रहास्तैर्लक्षणानि कथयेत् । अत्रायमुपदेशोऽवगन्तव्यः । लग्ने

प्रथमद्रेष्काणे ग्रहाश्च स्वावस्थितराशौ प्रथमद्रेष्काणगाश्चेत्फलं निरूपणीयम्। अन्यथा लक्षणान्तरैः संवादश्चिन्त्यः। अयं विधिर्जन्मनि प्रश्ने चोपयुज्यते ॥ २४ ॥

( शार्दूलविक्रीडितम् )

तस्मिन्पापयुते व्रणं शुभयुते दृष्टे च लक्ष्मादिशे-
त्स्वर्क्षांशे स्थिरसंयुतेषु सहजः स्यादन्यथागन्तुकः।
मन्देऽश्मानिलजोऽग्निशस्त्रविषजो भौमे बुधे भूभवः
सूर्ये काष्ठचतुष्पदेषु हिमगौ शृंग्यब्जजोऽन्यैः शुभम् ॥ २५ ॥

तस्मिन्निति। तस्मिन् कादिविलग्नविभक्तभगात्रे कं दृगित्यादिकल्पिते चायं विधिः प्रश्नजातके चिन्त्यम्। मन्देऽश्मानिलज इत्यस्याश्मजोऽनिलजो वेति विशेषः। ग्रहावस्थितराशिवशाद्वा दृष्टग्रहवशाद्वा कल्पनीयः। रोगप्रश्ने तस्मिन्नङ्गे रोगा वक्तव्याः ॥ २५ ॥

( हरिणीवृत्तम् )

समनुपतिता यस्मिन्भागे त्रयः सबुधा ग्रहा
भवति नियमात्तस्यावाप्तिः शुभेष्वशुभेषु वा।
व्रणकृदशुभः षष्ठो देहे तनोर्भसमाश्रिते
तिलकमसकृद्दृष्टः सौम्यैर्युतश्च स लक्ष्मवान् ॥ २६ ॥

इति श्रीवराहमिहिराचार्यकृते बृहज्जातके जन्मविधिर्नाम पञ्चमोध्यायः ॥ ५ ॥

समनुपतिता इति। यस्मिन्गात्रे कालाङ्गानि वराङ्गमित्यादिना कादिविलग्नविभक्त भगात्र इत्यनेन कन्दागित्यादिना च भौमस्य शिरो, बुधस्य मुखमित्यादिभिः राशिभिरधिपतीनां स्थानविधिना च त्रयो ग्रहास्त्रिभिर्लक्षणैः समनुपतिताः। बुधस्याश्रयवशात्फलमिति द्योतयितुं सबुधा इत्युक्तं तत्तदङ्गे शुभाश्चेदशुभेष्ववाप्तिः त्रिभिर्लक्षणैः संवादो जायते चेन्नियमेन शुभाशुभफलं वक्तव्यमित्यर्थः।

व्रणकृदशुभ इति लग्नादारूढाद्वा षष्ठस्थानं रोगस्थानं तत्राशुभग्रहश्चेद्रोगो भवति। तथाच कृष्णीये—

"ये क्रूराः षष्ठे लग्नात्स्वाङ्गविभागे वैकल्यम्।
केन्द्रत्रिकोणराशिषु न स्युर्गुरुसौम्यभृगुपुत्राः ॥ "

सर्वत्र दोषप्रदस्य ग्रहस्य शुभदृष्टौ दोषस्य न्यूनत्वं शुभप्रदस्य ग्रहस्याशुभदृष्टौ शुभस्यापि न्यूनत्वं भवतीति सिद्धं भवति ॥ २६ ॥

इति श्रीबृहज्जातके होराशास्त्रे दशाध्यायीटीकायां पञ्चमोऽध्यायः ॥ ५ ॥

# अथारिष्टाध्यायः ६.

( विद्युन्माला )

सन्ध्यायां हिमदीधितिहोरा
पापैर्भान्तगतैर्निधनाय ।
प्रत्येकं शशिपापसमेतैः
केन्द्रैर्वा स विनाशमुपैति ॥ १ ॥

अथायुर्निरूपणप्रकार उच्यते । तत्र प्रथममरिष्टयोगा उच्यन्ते । सद्योऽरिष्टयोगा एकवर्षान्तमृत्युदाः, अरिष्टयोगा द्वादशवर्षान्तमृत्युप्रदाः । एते दशानिरपेक्षा योगाः। योगारिष्टास्तु द्वात्रिंशद्वर्षान्तमृत्युप्रदाः । तत्परं सप्ततिवर्षान्तं मृत्युप्रदा मध्यमायुर्योगाः । ततः परं शतवर्षान्तमृत्युप्रदाः दीर्घायुर्योगाः । एते त्रिविधा योगा दशासापेक्षाः । ततः परममितायुर्योगाः । एतेषु षट्संज्ञाभिन्नेषु योगेषु संक्षेपेण सद्योऽरिष्टयोगा अत्रोच्यन्ते ।

सन्ध्यायामिति । सन्ध्याशब्देन सन्ध्याकालस्याशुभत्वमपि सूचितम् । तथा चोक्तम्-

"सन्ध्यायां दिग्दाहेऽनलघाते भूमिकम्पनिर्घाते ।
ग्रहणपरिवेशकाले जातोऽप्यल्पायुरत्यन्तम् ॥ " इति ।

हिमदीधितिरिति । पापैर्भान्तगतैरिति । हिमदीधितिना चन्द्रेण होरया लग्नराशिना पापैश्च जातो निधनाय भवति। अथवा हिमदीधितिहोरायाः पापैर्दोषैर्निधनाय भवति । चन्द्राल्लग्नाद्वाष्टमेशद्वाविंशद्रेष्काणयोश्चतुःषष्ट्यंशकयोश्च चन्द्रलग्नयोश्च गुणदोषवशादायुश्चिन्त्यमित्यर्थः । द्वाविंशतिमस्तु कारणं द्रेष्काण इत्यादिश्लोकादिभिरुपदिष्टादेतत्सर्वं सिध्यति । अत्र पापशब्देन दुर्निमित्तानि च सूच्यंते ।

पापैर्भान्तगतैरिति । राश्यंशगतेन चन्द्रेण लग्नेन च जातो निधनाय भवति । तथा चोक्तम्-

"राशिसन्धिषु ये जातास्ते नरा गतजीविनः ।"
"राश्यन्तगे सद्भिरवीक्षमाणे चन्द्रे -" इति च वक्ष्यति ।

तथा दुर्निमित्तैर्भान्तगतैर्जन्मनि लग्नराशिगतैर्जातो निधनाय भवति । ननु कथं पापशब्देन दुर्निमित्तानि वाच्यानि उच्यंते दुर्निमित्तानि पापफलानि निवेदयन्ति खलु । तथा च बृहत्संहितायाम्-

"अन्यजन्मान्तरकृतं कर्म पुंसां शुभाशुभम् ।
यत्तस्य शकुनं पाकं निवेदयति गच्छताम् ॥"

एतदुद्दिश्य सन्ध्यायां दिग्दाह इत्यादिश्लोके दिग्दाहादिदुर्निमित्तानि उक्तानि। अथ प्रत्येकमित्यादि। प्रत्येकं शशिपापसमेतैः केन्द्रैः शशिना पापेन च समेतैः। केन्द्रैः स भावो विनाशमुपैति। यो भावः केन्द्रेषु शशिपापसमेतः स विनाशमुपैति। शशिपापाभ्यां सहोपेतश्चेद्विनाशं विशेषेण नाशमुपैत्यविद्यमानत्वमुपैतीत्यर्थः। केवलं पापेनोपेतश्चेन्नाशमदर्शनमुपैतीत्यर्थादुक्तं भवति।

"पापैर्लग्नोपगतैः शरीरपीडां विनिर्दिशेत्कलहम्।
सुखसंस्थैः सुखनाशं ग्रहभेदं बन्धुविग्रहं च वदेत्॥
अस्ते गमनविरोधः कर्मस्थैः कर्मणामपि विनाशः॥ १॥

( इन्द्रवज्रा )

चक्रस्य पूर्वापरभागगेषु
क्रूरेषु सौम्येषु च कीटलग्ने।
क्षिप्रं विनाशं समुपैति जातः
पापैर्विलग्नास्तमयाभितश्च॥ २॥

चक्रस्येति न केवलमायुर्विषयमेतत् ( किन्तु ) सर्वकार्योपयोगि। तथाच कृष्णीये-
"मध्यमाह्नचतुर्थाभ्यां पूर्वार्द्धगताः शुभाः समृद्धिकराः।
कुर्युः पापा हानिमिति॥"

पापैर्विलग्नास्तमयाभितश्चेति अनेन चत्वारो योगाः पञ्चद्वादशगैर्द्वितीयाष्टमगैः पापैश्च। "अशुभगदिता योगा याप्या भवन्ति शुभेक्षिताः" इत्युक्तत्वाद्योगकर्तारः शुभेक्षिता न भवेयुः, न शुभयुक्ताश्च। चन्द्रलग्नेशजन्मेश्वराणां बलाबलमन्वेष्यम् फलमधिकमिदं यदत्र भावाद्भवनभनाथगुणैर्विचिन्तनीयम्' इत्युक्तत्वात्॥ २॥

( अनुष्टुप् )

पापावुदयास्तगतौ क्रूरेण युतश्च शशी।
दृष्टस्तु शुभैर्न यदा मृत्युश्च भवेदचिरात्॥ ३॥

पापाविति। लग्नास्तयोः पापौ चन्द्रश्च पापसहितस्तदारिष्टयोगः। दृष्टस्तु शुभैरित्यादिनास्यापवादरहितत्वं स्वतः शुभदृष्टिरपवाद इति सिद्धम्। तथा च सारावल्याम्-

"चन्द्रः शुभवर्गस्थः क्षीणोऽपि शुभेक्षितः सुहृत्।
भागोऽरिष्टहराणां श्रेष्ठो वातहराणां यथा वस्तिः॥"

इति स्वधिमित्रांश इति निरूपणीयम्॥ ३॥

( अनुष्टुप् )

क्षीणे हिमगौ व्ययगे पापैरुदयाष्टमगैः ।
केन्द्रेषु शुभाश्च न चेत्क्षिप्रं निधनं प्रवदेत् ॥ ४ ॥

क्षीणे इति । केन्द्रेषु शुभाश्च न चेदिति सर्वारिष्टस्यापवादः ।

"गुरुशशिसहिते कुलीरलग्ने शशितनये भृगुजे च केन्द्रयाते ।
भवरिपुसहजोपगैश्च शेषैरमितमिहायुरनुक्रमादिना स्यात् ॥ "

इत्यमितायुर्योगकथने गुरूदयश्च गुरोश्चन्द्रयोगश्च शशितनयशुक्रयोः केन्द्रगतत्वं चारिष्टयोगापवादलक्षणमिति सिद्ध्यति ॥ ४ ॥

( चामरम् )

क्रूरसंयुतः शशी स्मरांत्यमृत्युलग्नगः ।
कंटकाद्बहिः शुभैरवीक्षितश्च मृत्युदः ॥ ५ ॥

क्रूरेति । क्रूरग्रहैरबलैर्वा संयुतः स्मरान्त्यमृत्युलग्नगश्चन्द्रो मृत्युदः शुभा यदि न केन्द्रगताः । तथाच सारावल्याम्-

"व्ययाष्टसप्तोदयगे शशांके पापेन युक्ते शुभदृष्टिहीने ।
केन्द्रेषु सौम्यग्रहवर्जितेषु प्राणैर्वियोगं व्रजति प्रजातः ॥" इति ॥५॥

( पृथ्वीछन्दः )

शशिन्यरिविनाशगे निधनमाशु पापेक्षिते
शुभैरथ समाष्टकं दलमतश्च मिश्रैः स्थितिः ।
असद्भिरवलोकिते बलिभिरत्र मासं शुभे
कलत्रसहिते च पापविजिते विलग्नाधिपे ॥ ६ ॥

शशिनीति । अरिविनाशगे न केवलं पापेक्षिते शशिनि आशु निधनं केवलं शुभेक्षिते समाष्टकं मिश्रेक्षितं ततो दलवर्षचतुष्कं जीवति । शुभैस्त्रिभिरेकेन पापेन दृष्टश्चेत्सप्तवर्षं जीवति । शुभैरखिलैर्द्वाभ्यां पापाभ्यां दृष्टश्चेत्पञ्चवर्षाणि जीवति । पापैस्त्रिभिः शुभैनैकेन दृष्टश्चेद्वर्षं जीवति । पापैस्त्रिभिर्द्वाभ्यां शुभाभ्यां दृष्टश्चेद्वर्षद्वयं जीवति । तथा च सारावल्याम्-

"वर्षान्मारयति शशी षष्ठाष्टमराशिसंस्थितो लग्नात् ।
सद्यः क्रूरैर्दृष्टः सौम्यैरब्दाद्विर्निर्दिशेन्निधनम् ॥
मृगुभशुभैः संदृष्टे वर्षचतुष्केण निर्दिशेदन्तम् ।
अनुपातः कर्तव्यः प्रोक्तग्रहैर्न च दृष्टः ॥"

इत्यस्यापवादमुपरिष्टाद्वक्ष्यति । 'अशुभकृद्वदुपोह्नि दृश्यमूर्तिर्गलिततनुश्च शुभोऽन्यथान्यदूह्यम् ।' अह्नि दिवा दृश्यमूर्तिः पूर्वपक्षगतश्चन्द्रः शुभकृदरिष्टयोगप्राबल्यकृद्गलिततनुश्च शुभो दिवा गलिततनुरपरपक्षगतश्चन्द्रः शुभः अन्यथान्यदूह्यम् । पूर्वपक्षे निशायां चन्द्रः शुभः । तथाच सारावल्याम्—

"पक्षे सिते भवति जन्म यदि क्षपायां
कृष्णेऽथवाह्नि शुभाशुभदृश्यमानः ।
तच्चन्द्रमा रिपुविनाशगतोऽपि यत्ना-
दापत्सु रक्षति पितेव शिशून्न हन्ति ॥"

असद्भिरवलोकिते इत्यादि बलिभिर्वक्रिभिरत्रारिविनाशे सहिते कस्मिंश्चिच्छुभग्रहैर्वक्रिभिः पापैर्दृष्टे मासं जीवति । तथाचोक्तम्—

"शशिवत्सौम्याः पापैर्बलिभिरवलोकिता न शुभदृष्टाः ।
मासेन मरणदाः स्युः पापजितो लग्नपश्चास्ते ॥" इति ।

लग्नाधीशस्य बलादायुश्चिन्त्यमिति सूचितम् । कलत्रसहिते चेत्यत्र च-शब्देनारिविनाशस्थानं च सूचितम् । तथाच सारावल्याम्—

"राशिप्रमितैर्वर्षैर्मारयति विलग्नपो रिपुस्थाने ।
मासैर्द्रेष्काणपतिर्दिवसैरंशाधिपो हन्ति ॥"

कलत्रसहिते च—शब्देन लग्नाधिपजन्मपती षष्ठाष्टमारिःफगौ प्रसवकालेऽस्तमितौ मरणकरौ मासे षष्ठाष्टमे वापि । चन्द्रः कुजरवियुक्तः स्वसुतस्थाने शुभैर्न संयुक्तः मरणं प्रयच्छति शिशोर्नवमे वर्षे न सन्देहः ।' इति ॥ ६ ॥

( मंदाक्रांता )

लग्ने क्षीणे शशिनि निधनं रन्ध्रकेन्द्रेषु पापैः ।
पापान्तस्थे निधनहिबुकद्यूनसंस्थे च चन्द्रे ।
एवं लग्ने भवति मदनच्छिद्रसंस्थैश्च पापै-
र्मात्रा सार्द्धं यदि न च शुभैर्वीक्षितः शक्तिभृद्भिः॥७॥

लग्ने क्षीण इति। लग्ने क्षीणे पृष्ठोदये शशिनि निधनं गतवति रन्ध्रकेन्द्रेषु पापैर्लग्ने पृष्ठोदये रन्ध्रकेन्द्रेषु पापैरित्येको योगः । पृष्ठोदये लग्ने निधनं गतवति शशिनीत्यपरो योगः । शशिनि निधनं गच्छति रन्ध्रकेन्द्रेषु पापैरिति तृतीयः । तथा च कृष्णीये—

"पृष्ठोदये विलग्ने क्रूरा विलग्नास्तसुखनिधनगताः ।
निधने च शीतरश्मिर्म्रियते रोगार्तकः पुरुषः ॥" इति ।

पापान्तस्थे एकराशौ स्थितयोः पापयोर्वा द्वितीयद्वादशयोर्वा मध्ये चन्द्र इति पापान्तस्थे निधनहिबुकद्यूनसंस्थ इत्यत्र दुर्धराख्ययोगापवादश्चयः । तथाच कृष्णीये—

"चतुरस्त्रदुर्धरागताः पापाः कुर्वन्ति सुचिरेण ।" इति ।

एवं लग्ने भवतीत्यादि । चन्द्रलग्नावुभौ पापमध्यगौ मात्रा सार्धं निधनं गच्छति। एतत्पापद्वयमध्यगा इत्यादियोगे मदनच्छिद्रसंस्थाः पापग्रहाः विरोधेनोक्तत्वादस्यायं श्लोकः किञ्चिदत्रोच्यते तत्र गर्भनाश उक्तः अत्र तु जातस्य संवत्सरान्तं मरणमुक्तम् । गर्भस्य पापबाहुल्यमिति वक्तव्यम् ॥ ७ ॥

( इन्द्रवज्रा )

राश्यंतगे सद्भिरवीक्ष्यमाणे
चंद्रे त्रिकोणोपगतैश्च पापैः ।
प्राणैः प्रयात्याशु शिशुर्वियोग-
मस्ते च पापैस्तुहिनांशुलग्ने ॥ ८ ॥

राश्यन्तग इति । राशिषु मृत्युभागाः शास्त्रान्तरेषु परिपठितास्तेषु स्थितश्चन्द्रो भागसंख्येष्वब्देषु मृत्युदो भवति । अन्तःशब्दोऽत्र मृत्युभागाः शास्त्रान्तरेषु द्रष्टव्याः तथा चोक्तम्-

"क्षीरप्रियो लोकसुखेश्वरश्च काव्यांतरे भाग्यलोकं सुखेन ।
मौनीराज्यं मृत्युभागाः प्रदिष्टा मेषादीनां वर्णसंख्यैर्हिमांशौ ।"
"मृत्युभागे स्थितश्चन्द्रः पापयुक्तो न सौम्यगः ।
निधने वापि केन्द्रे वा मात्रा सह विनश्यति ॥" इति ।

अथवा राश्यन्तगो राश्यरिष्टं राशिमृत्युभागेऽपि जातस्यारिष्टयोगो भवति। राशिमृत्युभागा अपि शास्त्रान्तरेषूक्ताः तथा चोक्तम्-

"पत्नं धनी रुद्ररौद्रं सुखेन प्राज्ञा भानुर्गोत्रजायानरज्ञः ।
वेश्नीनित्यं मृत्युभागाः प्रदिष्टा मेषादीनां तेषु जातो गतायुः ॥"
"दारुणान्तर्दशाकाले राश्यरिष्टसमान्विते ।
तस्मिन्काले मृतिं विन्द्यादन्यथा रोगमाप्नुयात् ॥" इति ।

इत्युक्तत्वात्त्रिकोणोपगतैः पापैश्चारिष्टम् । तथा चोक्तम्-

"त्रिकोणस्थेषु पापेषु कष्टं शूलान्मतिभ्रमः ।
स्थानभ्रंशः कुलभ्रंशो वंशच्छेदोऽथवा भवेत् ॥"

'अस्ते च पापैस्तुहिनांशुलग्ने' इति । दृग्द्रेष्काणादारभ्यैकोनविंशे द्रेष्काणे पापे स्थिते लग्ने चन्द्रे चारिष्टम् । तथा चोक्तं सारावल्याम्-

"दृग्द्रेष्काणपामित्र यस्य स्याद्दारुणो ग्रहः ।
होरां गतः शशांकश्च सद्यो हरति जीवितम् ॥ ८ ॥"

(हरिणीवृत्तम्)

अशुभसहिते ग्रस्ते चंद्रे कुजे निधनाश्रिते
जननिसुतयोर्मृत्युर्लग्ने रवौ तु सशस्त्रजः।
उदयति रवौ शीतांशौ वा त्रिकोणविनाशगै-
र्निधनमशुभैर्वीर्योपेतैः शुभैर्न युतेक्षिते॥ ९॥

अशुभेति। तथाच सारावल्याम्-
"ग्रहणोपगते चन्द्रे सक्रूरे लग्नगे कुजेऽष्टमगे।
माता सार्धं म्रियते चन्द्रवदर्केण शस्त्रेण॥"
अशुभसहिते ग्रस्ते चन्द्रे निधनाश्रिते इत्येको योगो लग्नेशेन। तथाच होरासारे-
"ग्रहणपरिवेशकाले जातः पापग्रहे विलग्नस्थे।
लग्नेशे बलवर्जिते जीवति पक्षत्रयं त्रिमासं वा॥" इति।
उदयति रवाविति। उदयति चन्द्रे रवौ वा त्रिकोणविनाशगैः पापैर्निधनम्। निधनशब्देनेष्टकार्योपघातश्च सूचितः। तथाच विद्वज्जनवल्लभाख्ये-
"केन्द्रत्रिकोणोपगतैः शुभाख्यैः पापेषु केन्द्राष्टमवर्जितेषु॥
नृपान्नराणामखिलार्थसिद्धिं विपर्ययः स्याद्विपरीतभेषु॥"
उदयति रवौ शीतांशौ वा त्रिकोणविनाशगैर्निधनमशुभैरित्युक्तं तस्मात्सर्वेषु केन्द्रत्रिकोणाष्टमगेषु पापाश्च लग्ने चन्द्रश्च सर्वकार्येषु कष्टमित्युक्तं भवति शशांकलग्नोपगतैरित्यादिनापमर्थः सूचितः॥ ९॥

(अपरवक्त्रम्)

असितरविशशांकभूमिजै-
र्व्ययनवमोदयनैधनाश्रितैः।
भवति मरणमाशु देहिनां
यदि बलिना गुरुणा न वीक्षिताः॥ १०॥

असितेति। असितादयश्चत्वारो ग्रहाः व्ययादिस्थानगताः सद वर्तमाना आशु मृतिप्रदा देहिनामिति। आत्मनो वा भ्रातुर्वा बन्धोर्वा पुत्रस्य वा भार्याया वा गुरोर्वा स्वसम्बन्धिबन्धुनाश इति यावत्। इति।

यद्भावादारभ्योक्तेषु स्थानेष्वसितादयश्चत्वारो ग्रहाः स्थितास्तस्यात्मादिभावभूतस्य देहिनो नाश इत्यर्थः। अथवा व्ययनवमोदयनैधनाश्रितैः इति। व्ययनैधनं सप्तमस्थानं तत्र गताश्चेन्मातुर्निधनं बन्धुनाशो वा। उदयनैधनमष्टमस्थानं तत्र

गताश्चेत्स्वोदरनाश इत्यादि व्युत्क्रमेण नैधनोदयनवमव्ययगतैरसितादिभिरप्यरिष्टयोगः । यदि बलिना गुरुणा न वीक्षिता इति । सर्वेषां योगानां कर्तारो ये ग्रहास्तेषां च सूचितम् । गुरुदृष्टौ सत्यामरिष्टयोगवैफल्यं सूचितम् । शुभदृष्टिषु गुरुदृष्टेराधिक्यम् ॥ १० ॥

( पुष्पिताग्रा )

सुतमदननवांत्यलग्नरन्ध्रे-
ष्वशुभयुतो मरणाय शीतरश्मिः ।
भृगुसुतशशिपुत्रदेवपूज्यै-
र्यदि बलिभिर्न युतोऽवलोकितो वा ॥ ११ ॥

सुतेति । भृगुसुतादिदृष्टियोगौ चन्द्रस्य सर्वत्रारिष्टयोगापवादत्वेनोक्तौ । अशुभयुत इत्यनेन शुभक्षेत्रांशदृष्टियोगाश्चिन्त्याः । अर्थांतरम् । 'सुतमदननवान्त्यलग्नरंध्रेष्वशुभयुतो मरणाय शीतरश्मिः' सुतान्त्यलग्नरन्ध्रेषु गुरुर्नाशायेत्यादि । एवमरिष्टाध्याये उक्तम् ।

एतेऽरिष्टयोगाः आचार्येण सुपरीक्षिताः प्रोक्ताः । ननु च किमन्यैः सारावल्यादिशास्त्रैरुक्ता अन्येप्यरिष्टयोगा नोक्ताः । उच्यन्ते । तेषु शास्त्रेष्वरिष्टयोगा बहवो निर्दिष्टाः तेषामपवादाश्च तथैवोक्ताः, अपवादानां मध्ये कस्याप्यपवादस्य सदा सम्भवादरिष्टयोगानामफलत्वमपि सिद्धं भवति । तस्मात्तदुभयकथनमनर्थकं भवतीति मत्वा संक्षेपात्केचित्सारभूता एवमाचार्येणोक्ताः तथाप्यरिष्टानन्त्यापवादानां च बलाबलविज्ञानादेव फलनिष्पत्तिज्ञानमिति शास्त्रान्तरैस्तेषां विज्ञानं कर्तव्यम् । 'पृथुविरचितशास्त्राद्गत्यनूक्तं च चिन्त्यम् ।' इत्याचार्येणात्रोक्तत्वात् शास्त्रान्तरं चिन्त्यमिति सिद्धं भवति । ननु कस्मादत्रायुर्योगा नोक्ताः पूर्वापरपर्यालोचनेन सिद्ध्यन्तीति । 'शशाङ्कलग्नोपगतैः शुभग्रहैः' इत्युक्तम् । 'केन्द्रेषु शुभाश्च न चेत्क्षिप्रं निधनं भवेदत्' इत्यत्र केन्द्रे शुभा आयुष्करा इति विज्ञायते । 'क्रूरेण युतश्च शशी दृष्टेश्च शुभैरनीक्षितश्च मृत्युदः' इत्यत्र लग्नाच्चन्द्राच्च केन्द्रे शुभाः सन्ति चेदायुर्भवतीत्यवगम्यते । 'मात्रा सार्धं यदि न च शुभैर्वीक्षितः शक्तिभृद्भिः' इत्यत्र वीक्षितं शुभानां बलवत्त्वे सत्यपि वीक्षणफलमिति ज्ञातव्यम् । 'यदि बलिना गुरुणा न वीक्षिताः' इत्यनेन दोषहरणे शुभवर्द्धने च शुभानां मध्ये गुरोर्वीर्याधिकमस्तीत्युक्तं भवति तथा चोक्तम्—

"निःशेषदोषहरणे गुणवर्धने च
धीर्यं गुरोरधिकमस्त्यखिलग्रहेभ्यः ।

तद्वीर्यवाददशशक्तिभृतौ शशुक्रौ
चान्द्रं बलं तु निखिलग्रहवीर्यबीजम् ॥" इति ।
"शुभं वर्गोत्तमे जन्म वेशिस्थाने च सद्ग्रहे ।
अशून्येषु च केन्द्रेषु कारकाख्यग्रहेषु च ॥" इति वक्ष्याति ।
पुनः—"होरादयस्तनुकुटुम्बसहोत्थबन्धु-
पुत्रारिपत्निमरणानि शुभास्पदायाः ।

रिःफाख्यम् ।"

इति प्रथमं द्वादश भावा उक्ताः। तस्मान्मरणमष्टमराशौ तल्लग्नराशौ च चिन्त्यमिति सिद्धं भवतु । कथयन्त इति ।

"सुहृदरिपरकीयस्वर्क्षतुङ्गस्थितानां
फलमनुपरिचिन्त्यं लग्नदेहादिभावैः ।
समुपचयविपत्तिः सौम्यपापेषु सत्पः
कथयति विपरीतं रिःफषष्ठाष्टमेषु ॥"

इत्युक्तत्वाल्लग्नादिभावेषु सौम्यपापेषु सत्सु समुपचयविपत्ती विज्ञातव्ये। रिःफषष्ठाष्टमेषु विपरीतं रिःके शुभे सति व्ययाभावः जीवस्य तु खलत्वम् इत्युक्तत्वात् 'फलमधिकमिदं यदत्र भावाद्भवनभनाथगुणैर्विचिन्तनीयम्' । इत्युक्तमपि सर्वत्र चिन्त्यम्। तन्वादिभावानां तत्तद्राशितन्नाथयोर्बलवत्त्वे तद्भावपुष्टिरन्यथा हानिः । शुभाश्च न चेदित्यनेन केन्द्रशुभानामायुष्करत्वमस्ति । तथा चोक्तमन्यत्र—

"त्रिषडायगतैः पापैः सौम्यैः केन्द्राश्रितैरशीत्यब्दः ।
जीवति चात्रोद्भूतो मिश्रैर्वा षष्टिवर्षं च ॥" इत्युक्तत्वात् ।
"गुरुचन्द्रौ हिबुकस्थौ लग्नेशे भावगे बलाढ्ये च ।
सौम्ये दशमं याते त्वशीतिवर्षं च परमायुः ॥" इति ।
"लग्ने क्षीणे शशिनि निधने रन्ध्रेकेन्द्रेषु पापैः ।" इति ।

'केन्द्राष्टमेषु पापानामिति कष्टत्वात्त्रिकोणोपगतैः पापैः' इति त्रिकोणोपगतानां पापानामप्यतिकष्टत्वमुक्तम् । तस्मादतिशयेन कष्टः—

"केन्द्रत्रिकोणनिधनेषु न यस्य पापा
लग्नाधिपः सुरगुरुश्च चतुष्टयस्थौ ।
भुक्त्वा सुखानि विविधानि च पुण्यकर्मा
जीवेच्च वत्सरशतं स विमुक्तरोगः ॥" इति ।

अहनि निशि च चन्द्रे स्वेऽधिमित्रांशके वा
सुरगुरुसितदृष्टे वित्तवान्स्यात्सुखी च ॥"

अरिष्टनाशकत्वमप्यनेनोक्तम् । 'सौम्यैः स्मरारिनिधनेष्वधियोग इन्दोः' इत्यादियोगोऽप्यरिष्टनाशकरः । 'होराफलं लग्नपतेः समानम्' इति वक्ष्यमाणेन जातफलं समस्तं लग्नाधिपसमानम् । लग्नपतौ बलाढ्ये शुभग्रहयुतदृष्टे पापग्रहदृष्टियोगरहिते च होराफलं शुभं परिपूर्णं भवति, अन्यथाप्यशुभं भवति । चन्द्रप्राधान्येन चन्द्रांशकप्राधान्येन वा आरोपणीयमिति ॥ ११ ॥

( भ्रमरविलसितम् )

**योगे स्थानं गतवति बलिन-**
**श्चन्द्रे स्वं वा तनुगृहमथवा ।**
**पापैर्दृष्टे बलवति मरणं**
**वर्षस्यान्तः किल मुनिगदितम् ॥ १२ ॥**

इति श्रीवराहमिहिरकृते बृहज्जातकेऽरिष्टाध्यायः षष्ठः समाप्तः ॥ ६ ॥

योगे स्थानमिति । चन्द्रशब्देन शुभाशुभफलदो लग्नाधिपो वा तत्तद्भावाधिपो वा ग्रहो विवक्षितो बलिनो ग्रहस्य राशिं स्वस्थितराशिं वा स्वराशिं वा प्रविशति तदा शुभाशुभफलप्राप्तिः । पापैर्दृष्टे बलवति मरणं शुभैर्दृष्टे शुभं वर्षस्यान्तःस्थानम् । वर्षशब्देन ग्रहपरिवृत्तिर्वाच्यते । चन्द्रस्य नाक्षत्रमासादर्वाक् सूर्यस्य संवत्सरादन्तर्भौमस्यापि स्वपरिवर्तमानादन्त इत्यादि । बृहस्पतेर्द्वादशसंवत्सरादन्तः फलदग्रहस्य स्वराश्युच्चलग्नबलवद्ग्रहगतराशिप्राप्तिकाले फलसिद्धिः । तथा चोक्तम्-

"कालेन यावता गच्छेच्छुभः पापोऽपि वा ग्रहः ।
लग्नं स्वोच्चं स्वगेहं वा तस्मिन्काले फलं भवेत् ॥
फलदा हि ग्रहाश्चिन्त्याश्चन्द्रसूर्योदयस्थिताः ।
कालेन यावता प्राप्तः शुभः पापोयवोदयम् ॥
तत्काले पृच्छता वाच्यमतीतं स्याच्छुभाशुभम् ।
शुभः पापोऽपि वा लग्नं यस्मिन्काले प्रवक्ष्यति ॥
तत्काले प्रवदेद्भावि शुभाशुभफलं नृणाम् ।"
लग्नादाप्रथमगैरानयमरपैश्च पथमात्रयमात् ।
आलग्नगैरपि भवेद्भावि च भूतं शुभं वाच्यम् ॥
लग्नवदुदितं कृत्वा द्वादशभागानतीतरविभागे ।

यतिभे पापस्ततिमे वर्षे भावक्षयः शुभा संपत्॥
अथवा प्रश्नादौ तत्काले मरणादिदुःखकरम्।"

यस्मिन्राशौ गुलिकादिषु कष्टमतो यस्मिन्राशौ समराशिः योगे बलिनः स्थानमित्युक्तम्। शुभशकुननिमित्तं च यस्मिन्राशौ शुभग्रहाः शुभफलदाश्च यस्मिन्राशौ तत्र चन्द्रार्कजीवमन्दा गृह्यन्ते। तेषु यस्मिन्काले यः कष्टस्तस्मिन्राशौ तिष्ठति सति मरणादिरित्यादि चिन्त्यम्। 'वर्षस्यान्तः किल मुनिगदितम्' इति किलशब्दोऽत्र विकल्पार्थः, अरिष्टफलं सर्वदा भविष्यति स्वपरीक्षितं यथापि मुनिगदितमेव कथनीयमिति॥ १२॥

इति श्रीवराहमिहिराचार्यकृतबृहज्जातके दशाध्यायीटीकायामरिष्टयोगाध्यायः षष्ठः॥ ६॥

## अथायुर्दायाध्यायः ७.

(पुष्पिताग्रा)

मययवनमणित्थशक्तिपूर्वै-
र्दिवसकरादिषु वत्सराः प्रदिष्टाः।
नवतिथिविषयाश्विभूतरुद्रा
दशसहिता दशभिः स्वतुंगभेषु॥ १॥

अथायुर्दाय उच्यते।

मयपवनेति। स्वतुङ्गभेषु स्वोच्चस्थेषु ग्रहेषु जातस्य राजयोगसम्भवाद्राज्ञामुच्चनीचदशा नेतव्या। 'यशस्विनां च जन्तूनामुच्चनीचक्रमो यतः' इत्युक्तत्वान्मययवनेत्यादि बह्वाचार्यकथनात्सर्वपुरुषाणां चिन्तनीयेत्युक्तं भवति। कलियुगादावेव ते वत्सरा उपदिष्टाः पुनस्त्रैराशिकवदायुर्ह्रसति॥ १॥

(मन्दाक्रांता)

नीचेऽतोऽर्द्धं ह्रसति हि ततश्चांतरस्थेऽनुपातो
होरा त्वंशप्रतिममपरे राशितुल्यं वदन्ति।
हित्वा वक्रं रिपुगृहगतैर्हीयते स्वत्रिभागः
सूर्याच्छन्नद्युतिषु च दलं प्रोज्झ्य शुक्रार्कपुत्रौ॥ २॥

नीचेतोर्द्धमिति "होराराशि रिपुगृहगतैर्हीयते स्वत्रिभागं राश्यंशमतिमम्" इत्यंशशब्देनांशनाथस्य बलाधिक्ये राशितुल्यं साम्येऽपि स्यात् भतुल्यता इति वा। वक्रमित्यत्र वक्रशब्देन वक्रचारी-ग्रहश्चोच्यते। तदंशक्रमानयने वक्रचारिणो ग्रहस्य शत्रुक्षेत्रहरणं न विधेयम्। शत्रुक्षेत्राणि त मययवनादिषु केषांचित्पक्षे जीवो जीव-

बुधाविति । अन्येषां सत्योक्ते सुहृद इत्यादिना कल्पनीयानि फलसंपदेव निर्णयः । सूर्याच्छन्नद्युतिषु इत्यत्र तु-शब्देन रहितकरांशकत्वेऽधराश्यंतरगतत्वे ऽयंशं हीयते । तथा चोक्तम्-

"हरत्यर्द्धं ग्रहो मूढह्र्यंशं राश्यंतरस्थितः ।" इति ।

तु-शब्देनांशकक्रमो बुधस्य मौढ्यहरणं नास्तीत्यपि सूचितम् । 'शुक्रार्कौ हरतो नायुश्चन्द्रजश्चांशकक्रमः' । इति वचनात् ॥ २ ॥

( प्रहर्षिणी )

सर्वार्द्धत्रिचरणपञ्चषष्ठभागाः
क्षीयन्ते व्ययभवनादसत्सु वामम् ।
सत्स्वर्द्धं ह्रसति तथैकराशिगाना-
मेकोंऽशं हरति वली तथाह सत्यः ॥ ३ ॥

सर्वार्द्धेति । एकराशिगानामेकोंऽशं हरति वलीति । तथाचोक्तम्-'एकर्क्षगतेषु बहुषु वलवानपहारकः । सर्वेऽप्यपहाराण्यपि हरणानि सम्भवंति चेत् । त्र्यस्यार्धहरणं कृत्वाऽन्येषु महद्धरणं कार्यम्॥"इति।'कृते त्र्यस्यार्धकेऽन्येषु महदेवैकमिष्यते' इत्युक्तत्वात्॥ ३॥

( वसंततिलका )

सार्द्धोदितोदितनवांशहतात्समस्ता-
द्भागोऽष्टयुक्तशतसंख्यमुपैति नाशम् ।
क्रूरे विलग्नसहिते विधिना त्वनेन
सौम्येक्षिते दलमतः प्रलयं करोति ॥ ४ ॥

सार्धोदितोदितेति । विधिना त्वनेनेत्यत्र तु-शब्देन ग्रहबलादन्यैर्लक्षणैर्दीर्घायुषो संभवे लमायुष्येव क्रूरोदये हीयमानमयोज्यमिति सूचितम् । लमायुष्येव तच्छोधनमिति वचनादल्पायुष्ये समस्तायुष्येवं शोधनमिति स्वान्स्वान्संशोध्य मध्यायुष इति वचनात् ॥ ४ ॥

( शिखरिणी )

समाः षष्टिर्द्विघ्नी मनुजकरिणाम्पञ्च च निशा
हयानां द्वात्रिंशत्खरकरभयोः पञ्चककृतिः ।
विरूपा साप्यायुर्वृषमहिषयोर्द्वादश शुनां
स्मृतञ्छागादीनां दशकसहिताः षट् च परमम् ॥ ५ ॥

समा इति। द्विघ्ना षष्टिर्विंशत्यधिकशतं संवत्सराः पञ्चनिशाश्च मनुष्याणां करिणां च परमायुः। हयानामश्वानां च द्वात्रिंशत्। खरकरभयोः पञ्चकृतिः पञ्चानां वर्गः पञ्चविंशतिसंवत्सराः वृषभमहिषयोः सा पंचकृतिः विरूपा चतुर्विंशतिसंवत्सरा इत्यर्थः शुनां द्वादश वत्सराः परमायुः। छागादीनामित्यत्रादिशब्देन विहृगयोरपि ग्रहणम्। किमर्थमत्र करिप्रभृतीनां परमायुरुक्तमिति चेदुच्यते तेषां करीन्द्रादीनामायुर्निरूपणार्थमिदं परमायुरुक्तम्। उक्तेन परमायुषा सूर्यादीनां ग्रहाणां पृथक् पृथग् दशासंवत्सरास्त्रैराशिकेनावगन्तव्याः। अस्मिंस्त्रैराशिके तु नवतियिविषयाश्विभूतरुद्रा दशसहिता दशभिरुक्तसंवत्सराः समुदायाः सप्तविंशत्यधिकशतं तत्प्रमाणराशिर्नवतिः सूर्यादीनां पृथग् दशासंवत्सराः भवंति। ततो हयादीनां जन्मकालीनैर्ग्रहैरुक्तविधिनायुर्निरूपणीयमित्युक्तं भवति॥ ५॥

(पुष्पिताग्रा)

अनिमिषपरमांशके विलग्ने
शशितनये गवि पञ्चवर्गलिप्ते।
भवति हि परमायुषः प्रमाणं
यदि सकलाः सहिताः स्वतुंगभेषु॥ ६॥

अनिमिषेति। अस्य श्लोकस्यैन्द्रदैवं छन्दस्तेनास्मिन्योगे जातश्चक्रवर्तिर्भवतीति सूचितम्। अन्यच्च कैश्चिद्गणिततन्त्रे बुधे निरूपिते वृषे पञ्चकृतिलिप्तात्मको बुधो रवौ मेषे दशमांशलग्ने तत्संभवति। तस्मात्कालांतरे ग्रहगणितानामदृढत्वात्कदाचिद्गणितेन बुधस्तादृशो भविष्यति। इति संचिन्त्य तयोक्तं तदर्थं खलु पञ्चसिद्धान्तिकाः प्रादुर्भूताः। कदाचिदेकः सिद्धान्तः संवदतिदृग्गणितानीतयोः कदाचिदन्यः पुनः कदाचिदपरस्तस्मात्तत्काले परीक्ष्य ग्रहाणां दृग्गणितसाम्यमानेतव्यामिति॥ ६॥

(शालिनी)

आयुर्दायं विष्णुगुप्तोपि चैवं
देवस्वामी सिद्धसेनश्च चक्रे।
दोषस्तेषां जायतेऽष्टावरिष्टं
हित्वा नायुर्विंशतेः स्यादधस्तात्॥ ७॥

आयुर्दायमिति। बह्वाचार्याभिमतोऽप्ययमुच्चदशामार्गः कदाचिदभिचरति तदर्थमिदमुक्तम्॥ ७॥

(शालिनी)

यस्मिन्योगे पूर्णमायुः प्रदिष्टं
तस्मिन्प्रोक्तं चक्रवर्तित्वमन्यैः।
प्रत्यक्षोयं तेषु दोषोऽपरोपि
जीवत्यायुः पूर्णमर्थैर्विनापि ॥ ८॥

यस्मिन्निति । विपर्ययविभागं प्रत्यक्षं चानादृश्योयं मार्गो नाङ्गीकर्तव्य इत्यभिप्रायः। तस्माज्जन्मकालं सम्यगवगम्य दशामानीय यया दशायानुभूतफलसंवादो दृश्यते तया भविष्यत्फलं चिन्तयेदिति । तथा चोक्तम्-

"यस्मिन्क्रमे संगृहीते पूर्वभुक्तं दशाफलम् ।
न विसंवादमभ्येति स क्रमो मम संगतः ॥ ८॥" इति ।

(उपछन्दः)

स्वमतेन किलाह जीवशर्म्मा
ग्रहदायम्परमायुषः स्वरांशम्।
ग्रहभुक्तनवांशराशितुल्यं
बहुसाम्यं समुपैति सत्यवाक्यम् ॥ ९॥

स्वमतेनेति । स्वमतेनेत्येको दोषः । कदाचित्संवदतीति ग्रहयुक्तनवांशराशितुल्यमिति स बहुसाम्यमिति । सत्यवाक्यत्वात्सत्याचार्यस्य सत्यनाम केवलं रूढं गौणं च भवति । सत्यवचनस्य प्रामाण्यमस्तीत्यर्थः । नवांशराशितुल्यामिति । लग्नराशेश्च लग्नांशकप्रावल्येंऽशकक्रमदशांकप्रावल्येंऽशकक्रमं दशा नेतव्येति । ९॥

(आर्या)

सत्योक्ते ग्रहमिष्टं लिप्तीकृत्वा शतद्वयेनाप्तम् ।
मण्डलभागविशुद्धेऽब्दाः स्युः शेषात्तु मासाद्याः ॥ १०॥

(वंशस्थम्)

स्वतुङ्गवक्रोपगतैस्त्रिसंगुणं
द्विरुत्तमस्वांशकभत्रिभागगैः ।
इयान्विशेषस्तु भदत्तभाषिते
समानमन्त्यप्रथमेष्युदीरितम ॥ ११॥

सत्योक्तेति । स्वतुंगेति ।भदत्तभाषिते सत्योक्ते पक्षे इयान्विशेषः स्वतुंगवक्रोपगतैरिति । ग्रहैर्यः आयुर्दायः आनीतः स त्रिसंगुणः कार्यस्त्रिभिर्गुण्य इत्यर्थः । वर्गो-

त्तमस्वनवांशकस्वग्रहस्वद्रेष्काणगतैर्ग्रहैः प्राप्तायुर्दायो द्वाभ्यां गुण इत्यर्थः। अत्र तु-शब्देनायमर्थोऽवगम्यते। यदिदमायुः ग्रहयुक्तनवांशराशितुल्यमित्युक्तम्। तद्ग्रहबलादीर्घायुषो संभवे पुरुषस्य ग्रहाणां भुक्तमेषाद्यंशकतुल्यां दशामानीय हरणानि कृत्वा द्वित्रिगुणसंभवे द्वित्रिगुणं च सम्पादितं ग्रहभुक्तराशिसंख्यातुल्यैः संवत्सरैः संयोज्यसम्पादनीयमिति। ग्रहयुक्तनवांशराशितुल्यमित्यनेनैव ज्ञातव्यं भवति। समानमन्यदुदीरितमिति प्रथमे उच्चनीचदशाविधाने यदुदीरितं तदत्रापि समानं इत्यर्थः। हरणमूढहरणानि पूर्ववत्कार्याणीत्यर्थः। अत्रापि को विशेषोऽस्ति। अंशकक्रमविधाने उदासीनहरणं च क्रियते। शत्रुक्षेत्रगतस्य त्रिभागहरणविधानादुदासीनक्षेत्रगतस्य षड्भागहरणं च विधेयं भवति 'स्वतुङ्गवक्रोपगतैस्त्रिसंगुणः' इत्यत्र तुङ्गवक्रोपगतयोः सह पाठाद्गुणसाम्याच्च स्वोच्चतुल्यं बलं वक्रगतौ भवतीत्यपि सूचितम् ॥१०॥११॥

( इन्द्रवज्रा )

किंत्वत्र भांशप्रतिमं ददाति
वीर्यान्विता राशिसमञ्च होरा।
क्रूरोदये पापचयः स नात्र
कार्यं च नाब्दैः प्रथमोपदिष्टैः ॥ १२ ॥

किंत्वत्रेति। अत्र सत्योपदेशे किंचिद्विशेषोऽस्ति। लग्नराश्यंशकस्य लग्नराशिगतो बलाधिके होरा राश्यंशप्रतिममायुर्ददाति। अंशकगते होरा वीर्यान्विता चेद्राशिसममायुर्ददाति। पुनश्च क्रूरोदये योऽपचय उच्चनीचमार्गे विहितः सोऽत्र न कार्यः। प्रथमोपदिष्टैर्नवतिथीत्यादिशब्दैश्च न कर्तव्यमिति ॥ १२ ॥

( इन्द्रवज्रा )

सत्योपदेशो वरमत्र किन्तु
कुर्वन्त्ययोग्यं बहुवर्गणाभिः।
आचार्यकत्वञ्च बहुम्रताया–
मेकन्तु यद्भूरि तदेव कार्यम् ॥ १३ ॥

सत्योपदेश इति। अत्र कलियुगे अंशकक्रमदशा संवादभूयिष्ठेति ॥ १३ ॥

( पुष्पिताग्रा )

गुरुशशिसहिते कुलीरलग्ने
शशितनये भृगुजे च केन्द्रगे वा।

भवरिपुसहजोपगैश्च शेषै-
रमितमिहायुरनुक्रमाद्दिना स्यात् ॥ १४ ॥
इति श्रीवराहमिहिराचार्यकृते होराशास्त्रे बृहज्जातके
आयुर्दायाध्यायः सप्तमः ॥ ७ ॥

गुरुशशीति। अमितायुर्योगा उक्ताः बह्वत्र निरूपणीयमस्ति तत्र सर्वे ग्रहा उक्तस्थानस्थाश्चेत्तस्यायुरमितं चन्द्रलग्नौ पृथक्स्थौ चेत्ताभ्यां पृथङ्निरूपणीयं चन्द्राद्वेति वक्ष्यति। केन्द्रस्थानामायुष्करत्वं त्रिषडायगतानां पापानामप्यायुष्करत्वमस्तीति सर्वत्र चिन्तनीयं चन्द्रलग्नयोर्बलाधिक्यं चायुष्करं बलिष्ठस्य जीवस्य लग्नगतत्वं च।

"बलिष्ठो लग्नगः सूरिः सर्वारिष्टविनाशकृत् ॥"

इत्यादिवचनात् ॥ १४ ॥

इति दशाध्याय्यामायुर्दायाध्यायः सप्तम ॥ ७ ॥

---

## अथ दशान्तर्दशाध्यायः।

( मालिनी )

उदयरविशशांकप्राणिकेन्द्रादिसंस्थाः
प्रथमवयसि मध्येऽन्ते च दद्युः फलानि।
नहि न फलविपाकः केन्द्रसंस्थाद्यभावे
भवति हि फलपक्तिः पूर्वमापोक्लिमेऽपि ॥ १ ॥

उदयेति। विंशत्यधिकशतसंवत्सराः परमायुः। तत्त्रिभागं कृत्वा प्रथमभागे वयसि उदयप्राधान्येन फलनिर्देशः। मध्यभागे वयसि चन्द्रप्राधान्येनान्त्यभागे वयसि रविप्राधान्येन कार्य इति। अस्मिन्नर्थे उदयरवीति क्रमो न विवक्षितः। अथ दशापरिग्रहविधौ तु उदयरविशशांकेषु बलवतो दशा प्रथमा। पुनस्तत्केन्द्रगतस्य पुनरापोक्लिमगतस्य। तदुक्तम्-'नहि न फलविपाकः' इत्यादिना केन्द्रे पुनः सप्तमगतस्य अन्त्ये दशमगतस्य पुनः पणफरगतस्य तत्र प्रथमलग्नाद्द्वितीयगतस्य पुनः पञ्चमगतस्येत्यादि पूर्ववत्। आपोक्लिमे च तद्वत्। उच्चनीचमार्गेषु दिवसकरादिष्विति दिवसकरस्य प्रथमोक्तया तदादिदशापरिग्रहो युक्तः। नवांशराशितुल्यमिति। राशिकथनादंशकक्रमे लग्नादिदशापरिग्रहः। चन्द्रारेन्दुजेति। चन्द्रस्य प्राधान्योक्ता निसर्गादयो चन्द्रदशापरिग्रहः इति प्रायश उपदिष्टं भवति। बाल्ये यौवने वार्धक्ये च केन्द्रादिस्थाः फलदाः। तथा च सारावल्याम्-

"केन्द्रात्पणफरमापोक्लिमं च संज्ञितं ततः ।
परस्ताद्बाल्ययुवस्थविरत्वे क्रमेण फलदा ग्रहास्तेषु ॥" इति ।

अनेनाध्यायेन प्रश्नादावप्युपयुज्यते । उदयरविशशांकप्राणिनो यस्मिन्काले प्रष्टा-स्वमभिमतं पृच्छति तदोदयराशिमवगम्य छायाजलयन्त्रादिभिर्गतनाडिकाः विज्ञाय ताभिरुदयलग्नमानीय तेन शुभाशुभं चिन्त्यम् । तदानीमेव रविमानीय तेनापि शुभाशुभस्य पाककालश्च निरूपणीयः । चन्द्रमपि तदानीमानीय तेन लग्नवत्फलं निरूपणीयम् । प्राणीति । प्रच्छकस्य भावादिना तेनारूढेन भूचक्रराशिना चोदया-रूढवशादवगतेन छिद्रराशिना च केन्द्रादिसंस्थैर्ग्रहैश्च फलं चिन्त्यते केन्द्रस्थैः शुभाशुभैः प्रथमे वयसि सदसत्परिपाकः पणफरस्थैर्मध्ये वयस्यापोक्लिमस्थैरन्ते वयसि-केन्द्रसंस्थाद्यभावे सर्वदा सत्फलविपाको भवत्येव । केन्द्रसंस्थाद्यभावे लग्नमित्यर्थः । तेन त्रिषु वयस्सु च फलनिरूपणं कर्तव्यमित्यर्थः । आपोक्लिमस्था अन्त्ये वयस्येव फलं दद्युरित्यत आह—'आपोक्लिमस्थिताः पूर्वमपि फलं दद्युः' इति किं पुनः पण-फरस्थास्तृतीयेन भावेन सहजगुणाः प्रथमे वयस्यपि चिन्त्याः नवमेन गुरुगुणदोषाः । षष्ठेन शत्रवः । पञ्चमेन पुत्राः । द्वितीयेन धनमेकादशेन च लाभमित्यादिसर्वभावफल-मपि सर्वदा चिन्त्यमित्यर्थः । केन्द्रादिसंस्था इत्युक्तविधिना पूर्वमापोक्लिमेऽपि इति पक्षान्तरं वा । आपोक्लिमे गतफलं, केन्द्रे वर्तमानफलं, पणफरे भविष्यत्फलं, केन्द्रा-त्प्राप्तेष्वनिवृत्ता इति । एतन्नवमाध्याये ॥ १ ॥

(इन्द्रवज्रा)

आयुष्कृतं येन हि यत्तदेव
कल्प्या दशा सा प्रबलस्य पूर्वा ।
साम्ये बहूनां बहुवर्षदस्य—
तेषाञ्च साम्ये प्रथमोदितस्य ॥ २ ॥

आयुरिति एवमुदयारूढच्छिद्रचन्द्राद्यैः सर्वप्रश्ने प्रथममायुश्चिन्त्यम्, अरिष्ट-योगा राजयोगादयश्च सर्वे चिन्त्याः । तथा दशा चानेतव्या । तथा चोक्तम्—

'जनलग्नतया प्रश्नलग्नं संकल्प्य पण्डितः ।
जातके यद्यदुद्दिष्टं तत्तत्प्रश्नेऽपि चिन्तयेत् ॥" इति ।

तत्र विशेषः—आरूढच्छत्रलग्नाधिपतीनां यो बलवांस्तस्य दशा अवस्था पूर्वं भवति । ग्रहाणां सप्तावस्था निरूणीयाः । "अथ बालः समर्क्षस्थो बालो बन्धुगृहे स्थितः । मृतनामातिनीचस्थो दशैवं स्थानतो भवेत्" "सूर्याद्दुदितमात्रोऽसौ सोऽति-बालःप्रकीर्तितः ।"

बालः सप्तांशकादूर्ध्वं कुमारस्तु ततः परम् ॥
वक्रारम्भे युवा प्रोक्तो वक्रकाले नराधिपः ।
आसन्नास्तमयो वृद्धो मृतोऽस्तंगत ईरितः ॥
अतिबालो दशाकाले जडो रोदनतत्परः ।
बालस्य तु दशाकाले क्रीडासक्तः कुमारकः ॥
कुमारस्य दशाकाले विद्यासक्तश्च नरः ।
यौवनस्य दशाकाले कामी भोगपरायणः ॥
वृद्धसंज्ञदशाकाले बलहीनो जडात्मकः ।
मृतसंज्ञदशाकाले मरणं याति निश्चयात् ॥" इति ।

एवमंशपतिर्वोदयाधिपतिर्वा लग्नांशकाधिपतिर्वा यो बलवान् तस्य या अवस्था सात्र पूर्वा भवतीति । तेषां बलसाम्ये बहुवर्षदस्य बहुकालफलदस्य निगदितेति निरूप्य बहुकालं यस्य फलस्य संवादस्तेन ग्रहेण फलं चिन्त्यम् । तेषां च साम्ये प्रथमोदितस्य बहुफलं संवादिनां सौम्ये यो ग्रहः प्रथमोदितस्तेषु राशिष्वेकत्र राशौ स्थिते न वदेदित्यर्थः ॥ २ ॥

( वसन्ततिलका )

एकर्क्षगोऽर्द्धमपहृत्य ददाति तु स्वं
त्र्यंशं त्रिकोणगृहगः स्मरगः स्मरांशम् ।
पादम्फलस्य चतुरस्रगतः सहोरा-
स्त्वेवम्परस्परगताः परिपाचयन्ति ॥ ३ ॥

एकर्क्षग इति । एकराशिगतौ द्वौ ग्रहौ चेत्तयोरेकोऽन्यस्य फलं स्वयं शुभश्चे-त्पुष्टं करोति, अशुभश्चेत्स्वयमशुभम् इत्यर्थः । तैर्ग्रहैः स्वकैर्भैर्गुणदोषा भवन्ति । पञ्चमस्थशुभाशुभैः पुत्रवशान्नवमस्थशुभाशुभैः पितृवशात्सप्तमस्थशुभा-शुभैः फलत्रवशाच्चतुर्थगतैर्मातृवशादष्टमस्थैरायुःक्लेशादिभिर्यथा पञ्चमस्थः शुभः पुत्रगुणादात्मगुणं त्र्यंशाधिकं करोति । नवमस्थः शुभः पितृगुणादात्मगुणं त्र्यं-शाधिकं करोति । तद्वीक्षणं च सप्तमस्थः शुभः कलत्रगुणमात्मगुणं सप्तांशाधिकं करोति । एवं दोषं च परस्परगताः परिपाचयन्ति ॥ ३ ॥

( इन्द्रवज्रा )

स्थानान्यथैतानि सवर्णयित्वा
सर्वाण्यधश्छेदविवर्जितानि ।

दशाब्दपिण्डे गुणका यथांश-
च्छेदस्तदैक्येन दशाप्रभेदः ॥ ४ ॥

स्थानानीति। एतानि स्थानानि पञ्चमनवमसप्तमचतुर्थाष्टमस्थानानि पापसंबाधाभावाच्छुभयोगाच्च छेदो नाशस्तेन हीनानि यदि चिन्तितानि तदानीं दशाब्दपिंडे गुणनाद्दशाब्दपतिः शुभमेव तस्य भावस्य यथासम्भवं छेदः। लग्नं द्वादशधा विभज्योदयदंशकेन वर्तमानार्थे गुणदोषौ चिन्त्यौ अतीतैर्द्वादशांशकैरधः, अतीतसंवत्सरेषु गुणदोषौ चिन्त्यौ। एषामंशकैर्भाविष्यत्संवत्सरेषु। तदुक्तम्—यथांशच्छेदः यथांशस्य छेदो भवति पापयोगादधिपतिबलहान्या तदैक्येन तत्संयोगाद्दशाप्रभेदोऽस्याप्रभेदः अवस्थादुःखमित्यर्थः। तस्मिन्संवत्सरे तस्य भावस्य-दुःखमित्यर्थः। तथा चोक्तम्—

"लग्नवद्भुदितं कृत्वा द्वादशभागानतीतरविभागे।
यातिमे पापस्ततिमे वर्षे भावक्षयः शुभैः सम्पद्॥
एष्यद्वादशभागैः सदसद्युक्तैस्तथैष्यवर्षेषु।" इति ॥ ४ ॥

(वैतालीयम्)

सम्यग्बलिनः स्वतुङ्गभागे
सम्पूर्णा बलवर्जितस्य रिक्ताः।
नीचांशगतस्य शत्रुभागे
ज्ञेयानिष्टफला दशा प्रसूतौ ॥ ५ ॥

सम्यगिति। जातकेषु सर्वबलसम्पूर्णस्य दशा शुभा सर्वबलहीनस्य दशा अशुभा इतरा मध्यमा। तथा च सारावल्याम्—

"स्वोच्चस्वराशिनिजभागसुहृद्गृहस्थाः
सम्पूर्णवीर्यरुचिरा बलिनः स्वकाले।
मित्रोच्चभागसहिताः शुभदृष्टियुक्ताः
श्रेष्ठां दशां विदधति स्ववयःसु खेटाः।
नीचशत्रुगृहं प्राप्तः शत्रुनीचांशसूर्यगः।
पापसम्पर्कमापन्नो दशां कुर्यादशोभनाम् ॥"

इति प्रश्नादौ। उदयाधिपतिरविशशांकारूढपतयश्च तैर्युक्तराश्यधिपाश्च सम्यग्बलिनः स्वोच्चभागस्थाः सम्पूर्णफलदास्तेषु बलहीनेषु पुरुषस्यावस्था नीचांशगताः शत्रुभागगताश्चेदनिष्टफलसामग्र्यम्। यथा गुरोर्हिमाश्वात्मजकुञ्जरावरचयः इति दशाफलमुक्तम्। न तन्नियतं दृश्यते लोके जनानां गुरुदशाकालः संभाव्यः। न तेषा-

मुक्तफलप्राप्तिरित्यनुपपत्तिपरिहाराय प्रसूतावित्युक्तम् । प्रसूतौ सम्पूर्णबले ग्रहे नृपत्वं भवतीत्युक्तम् 'जनयति नृपमेकोऽप्युच्चगो मित्रदृष्टः' इत्यादिना । ततः कुञ्जराश्वादिप्राप्तिश्चोपपद्यत इति । अरिष्टफलेत्यत्र फलशब्देन पूर्वत्र सम्पूर्णेऽष्टमफला इति । एतदुक्तं भवति । जन्मकाले ग्रहे बलवति दशायां तस्योक्तानि शुभफलान्येव । शुभग्रहः स्वोच्चगतो लग्नगतश्चेत्सर्वार्थसिद्धिप्रदो भवति । तथा च विद्वज्जनवल्लभाख्ये-

"पश्यत्येकश्चेच्छुभेषु स्वमुच्चं लग्नं प्राप्तः खेचरः प्रश्नकाले ।
स्थानैश्वर्यार्थोच्छ्रयो वृद्धिवाच्या नित्यं देहं एवमेवात्र तज्ज्ञैः" इति।

ननु तस्मिन् बलिन इत्यादिश्लोके दशादातुर्ग्रहस्य शुभदृष्टिरस्ति चेद्दशा शुभा इत्युक्तं सारावल्यां तु-'शुभदृष्टियुक्ताः श्रेष्ठां दशां विदधति' इत्युक्तम्। कथमेतद्घटते । नैष दोषः ।

"अशुभगदिता योगा याप्या भवन्ति शुभेक्षिताः ।
दृष्टस्तु शुभैर्न यदा मृत्युस्तु भवेदचिरात् ॥
यदि च न शुभैर्वीक्षितः शक्तिमद्भिः शुभैरयुतेक्षिते ।
भृगुसुतशशिपुत्रदेवपूज्यैर्यदि बलिभिर्न युतोऽवलोकितो वा ॥"
इत्यादिवचनैः शुभदृष्टेरशुभनाशकरत्वं केन वा नोह्यते ।
"क्षीणेन्द्वर्कमहीसुतार्कतनयाः पापा बुधस्तैर्युतः ।"

इत्युक्तस्य ग्रहाणां शुभाशुभफलप्रदानज्ञापनं विना किं प्रयोजनमवगम्यते । तस्माच्छुभग्रहदृष्टिः शुभेति किमु वक्तव्यम् । पुनरुच्चगतं लग्नस्थं ग्रहमुच्चको ग्रहः पश्यति चेद्राज्ञो राज्यसिद्धिरपि वक्तव्या । लग्नशब्देनारूढोऽपि विवक्षितः । तथा च विद्वज्जनवल्लभाख्ये-

"यदि विलग्नगमुच्चगतं ग्रहं समवलोकयते ग्रह उच्चगः ।
भवति तत्समये समुपेयुषः सपदि राज्यमिति प्रवदेद्बुधः ॥"
"जनयति नृपमेकोऽप्युच्चगो मित्रदृष्टः
प्रचुरधनसमेतं मित्रयोगाच्च सिद्धिम् ।"

इति वक्ष्यति च 'उच्चस्थस्य ग्रहस्य वक्रगतेश्च बलं नान्यैर्हरिष्यते ।' तथा च सारावल्याम्-

"उच्चेशेन विलोमे च बलं नान्यैर्हरिष्यते ।
कालस्यातिबलत्वं स्याच्चेति चारसवक्रितः ॥" इति । ॥ ५॥

( इन्द्रवज्रा )

भ्रष्टस्य तुङ्गादवरोहिसंज्ञा
मध्या भवेत्सा सुहृदुच्चभांशे ।

आरोहिणी निम्नपरिच्युतस्य
नीचारिभांशेष्वधमा भवेत्सा ॥ ६ ॥
( उपजातिः )
नीचारिभांशे समवस्थितस्य
शस्ते गृहे मिश्रफला प्रदिष्टा ।
संज्ञानुरूपाणि फलान्यथैषां
दशासु वक्ष्यामि यथोपयोगम् ॥ ७ ॥

भ्रष्टस्येति । नीचारिभांशे इति । अतितुङ्गाद्भ्रष्टस्यातिनीचभावावधिदेशस्थाने अवरोहिसंज्ञा दशा॥अतिनीचाद्भ्रष्टस्यात्युच्चभागान्तरस्थितौ आरोहिणी दशा । एतदुक्तं भवति । परमोच्चे यत्फलमुक्तं तत्फलं तस्मादारभ्य क्रमेण ह्रसति परमनीचे शून्यं भवति, तत्रापि सुहृदुच्चभागादिस्थितवशात्फलस्योत्कर्षापकर्षौ ज्ञेयौ । पुनरयमुपदेश उच्यते जन्मलग्नेशयोर्बलवान् जन्मकाले तस्यारोहित्वे पूर्वस्मात्तस्य ग्रहस्योपघातो भवति आरोहित्वे वृद्धिर्भवति । एवमुच्चनीचवशादपि फलं चिन्त्यमित्युक्तं भवति । उच्चनीचवशान्मूलत्रिकोणस्वगृहमित्रोदासीनशत्रुक्षेत्रनीचस्थितवशाच्च फलविशेषश्चिन्त्यते इत्युक्तम् । नीचारिभाग इति अत्र नीचारिभागे शस्तग्रहस्य दशा मिश्रफला । अत्र ग्रहसंस्थितराशिमात्रावगमनेन केवलं वक्तव्यम् । अंशकपरिज्ञानं चावश्यकमित्यवगन्तव्यम् । नीचारिभाग इति । सर्वेषु राशिषु नीचारिभागेषु नीचनवांशे शत्रुनवांश इति।नीचारिगृहे शस्ते नवांशके स्थितस्य दशा च मिश्रफलदा इत्येतदप्यनेनैवोक्तं भवति।शस्तानि ग्रहाणामुच्चत्रिकोणक्षेत्रबन्धुराशयस्तेषु राशिष्वपि किञ्चिद्दिश्यते । तथा च सारावल्याम्—

"अत्युच्चमिति द्रव्यं महान्तमपि भास्करः स्वतुंगस्थः ।
मृष्टाशनाम्बराढ्यं सुभूषणं शीतगुः कुरुते ॥
तेजस्विनं कुतनयः दुःखसहं गर्वितं प्रवरशूरम् ।
मेधाविनं कुलाढ्यं निपुणं वाक्पे बुधः कुरुते ॥
विख्यातं गुरुराढ्यं विद्यासंभृतसत्कृतज्ञं च ।
स्वोच्चे भृगोश्च तनयो विलासहास्यप्रनृत्यपरम् ॥
स्वोच्चस्थो रवितनयो नृपलब्धनियोगमपि जनयेत् ।"
"भानुस्त्रिकोणसंस्थो धनवन्तं मुख्यशीलमतिनिपुणम् ॥
भोक्तारं धनवन्तं शशी प्रसूतौ त्रिकोणगः पुरुषम् ।
वक्रोऽपि तस्करपतिं शूरं बलनिर्दयं चापि ॥

सौम्यो विनोदशीलं त्रिकोणगो वै नरं कुरुते ।
जीवः पुरोहितवरं महत्तरं नयविदां सुखोपेतम् ॥
दानवगुरुरपि जनयेद्ग्रामवरणो वरिष्ठमास्यमतिम् ।
आत्मत्रिकोणमार्किर्धनदत्तकुरुपतिं स्वधर्मरतम् ॥"
"शीतरश्मिर्मनस्विनं रूपवन्तमात्मर्क्षे तीक्ष्णमयूखः ।
कुरुते महोग्रमुग्रक्तकर्माणमाढ्यं प्रचंडचपलं भौमः ॥
कुरुते स्वराशिगः पुरुषं शशितनयोऽपि कुरुते कथापण्डितं चापि ।
काव्यश्रुतज्ञमाढ्यं शुभचेष्टवेषं वाक्पतिः स्वराशिस्थः ॥
दानवपूज्यः कुरुते कृषीवलं स्थिरवित्तं च ।
कुरुते शनैश्चरोऽपि मान्यमदुःखं स्वराशिगः पुरुषम् ॥"
"मित्रगृहेऽर्कः ख्यातं सुस्थिरहृदयं च दातारम् ।
मित्रर्क्षगः शशाङ्कः समुदयसौख्यं सुधनमानम् ॥
अंगारकोऽपि कुरुते सुहृद्धने रक्षणासक्तम् ।
शशिजः सुहृद्गृहगतः कुरुते चातुर्यहास्यधनवंतम् ॥
वचसामधिपः पूज्यं सतां च संमृष्टकर्माणम् ।
मित्रगृहे भृगुतनयः सुहृत्प्रियं दयितवित्तश्च ॥
इष्टसुतं भास्करजः कुरुते च परान्नभोजिनं पापम् ।"
"नीचे सविता कुरुते प्रेष्यं बान्धवजनावधूतं च ॥
हिमरश्मिरल्पपुण्यं रोगिणमतिदुर्भगं लोके ।
नीचस्थः क्षितितनयोऽनर्थव्यसनोपततमतिनीचम् ॥
नीचे हिमकरपुत्रः क्षुद्रं स्वकुजातबद्धमतिवैरम् ।
नीचे गुरुः प्रकुरुते मलिनं मातावमानमतिनीचम् ॥
असुरदयितः स्वतन्त्रं नष्टदारं विषमशीलं च ।
कोणो विपन्नशीलं विमर्दितान्यारम्भप्रतिरतं च ॥"
"कुरुते शत्रुगृहेऽर्को निःस्वं विषपीडितं चापि ।
तुहिनमयूखः कुरुते हृद्रोगिणमरिगृहे नरं सततम् ॥
चद्धामयमरिभाजं विकलं रुधिरोऽतिदुर्भगं लोके ।
अज्ञानं वाग्दीनं बुधोऽरिभे नैकदुःखमतिदीनम् ॥
अरिभे गुरुर्विधत्ते वैद्यं विधनं च सद्वृत्तम् ।
शुक्रारिगृहे भृतकं कृतघ्नमतिदुःखितं जनयेत् ॥
भास्करपुत्रः कुरुते मलिनं व्याध्यध्वशोकसंतप्तम् ।"

इत्येतत्सर्वं राशिफलाध्यायेन कुलसमकुलमुख्येत्यादिना च सिद्ध्यतीत्यादि-राश्याश्रयवशादुक्तानामंशकाश्रयवशादन्यथार्थं निरूपणीयमिति–

"नीचारिभांशे समवस्थितस्य शस्ते गृहे मित्रफला प्रदिष्टा।"

इत्युक्तम्। एतदिष्टानिष्टमिश्रफला प्रदिष्टेत्युक्तम्। एवमिष्टानिष्टमिश्रफलं निरूपणीयम्। एवमिष्टानिष्टमिश्रफलानयनं सम्यग्बलिन इत्यर्थश्लोकद्वयेनोच्चत्रिकोण-स्वसुहृदित्यादिकेनोपदिष्टाः। भावाध्यायेऽपि वक्ष्यमाणेन श्लोकेनाचार्येण सूचितमत्र। अन्यशास्त्रेऽपि स्पष्टमुक्तमत्र मयोच्यते–

'अर्कादिग्रहान्परमनीचभगाद्विशोध्य शिष्टात्राशीन् दशभिर्भागान् विंशत्या च गुणयेत् पुनश्चेष्टाकेन्द्रं पूर्ववदानयेत् सायनांशोऽर्कस्त्रिराशिसहितोऽर्कस्य चेष्टाकेन्द्रम्।'

भानुस्फुटरहितश्चन्द्रस्य चेष्टाकेन्द्रम्। कुजादीनां तु मध्यस्फुटान्तरार्धम्। मध्यमे स्फुटाधिके शीघ्रोच्चयो भवेत् मध्यमे स्फुटादूने शीघ्रोच्चाद्विशोधयेत् पुनस्तस्माच्छी-घ्रोच्चात्स्फुटं त्यजेत्। एवं चेष्टाकेन्द्रमानीय "शेषमण्डकियद्यच्छ इष्टकफलं चरित्तवेणुम् अदजातकसंग्रहात् लेपक छिपोच्छईरुकरद।" एवमानीते इष्टानिष्टफले तस्य ग्रहस्योच्चादिनिसर्गान्तं षट्प्रकारमानीय तेन बलसमूहेन गुणयेत्। ग्रहद-शायामन्तर्दशायामायव्ययसंख्यासाधने स्याताम्। आभ्यां सर्वग्रहैरानीतां दृष्टिं पृथग्गुणयेत् एते अभिदृष्टिफलप्रदानकाले आयव्ययसाधने स्याताम्।

अथ बलकालायव्ययसाधने उच्येते उच्चरश्मिबलमेनोच्चबलं, चेष्टारश्मिबल-मेव चेष्टाबलं तयोर्योगदलं तत्पष्टिगतं साधितमनिष्टफलमिति विभागः। उच्चादि-स्थानेनार्धहोरादिवर्गश्च युक्तमिष्टफलमनिष्टफलं च स्थानबलेन हत्वा गुरुज्ञार्काणां शतपञ्चकैः सितचन्द्रयोस्त्रिपापकेन्दुना मन्दभौमयोः षण्णवत्या विभजेत्। स्थान बलकालेऽप्यायव्ययसाधने भवतः। दिग्बलेन युक्तेष्टानिष्टफले दिग्बलेन हत्वा त्रिंशता विभजेत्। कालबलेनोक्तवत्संयुक्तेऽनिष्टफले इतरमलसंयोगमपि विधाय कालबलेन गुणयेदर्कज्ञाराणां विचन्द्रे विभजेत्। सितेन्द्वोः शतेन मन्दारयोः सप्तषष्ट्या विभजेत्। कालबलफलकाले आयव्ययसाधने भवतः। एवमयनबलमु-क्तेष्टानिष्टफले अयनबलेन हत्वा सर्वेषामेव त्रिंशता विभजेत्। एवं चेष्टाबलयुक्ते–

"स्थानदिक्कालवीर्यघ्नं चेष्टायनबलाहतम्।
यदुक्तं संख्यया भाज्यं तत्कालायनसाधनम्॥" इति।

पुनः रविरविजगुरवः पञ्चषट्चन्द्रैः सितः शीतगुः कृतिचन्द्रैः शनिभौमौ षण्णवत्या बलिमता दिक्चेष्टायनवीर्यं तु दलमेव प्रकीर्तितम् एकैकशः सप्ताङ्गैः कालबले इति। अथ भावानामिष्टानिष्टफले उच्येते–

भावानां ग्रहवियुक्तानामधिपतिबलमेव फलं ग्रहयुक्तानां तु तस्य ग्रहस्य पाप-शत्रुनीचराशिश्चेदिष्टफलं भावसाधनेन हत्वा षष्ट्या विभजेद्यामिष्टफलमेव प्राक्-

सौम्यो विनोदशीलं त्रिकोणगो वै नरं कुरुते ।
जीवः पुरोहितवरं महत्तरं नयविदां सुखोपेतम् ॥
दानवगुरुरपि जनपद्ग्रामवरणो वरिष्ठमास्यपतिम् ।
आत्मत्रिकोणमार्किर्धनदत्तकुलपतिं स्वधर्मरतम् ॥"
"शीतरश्मिर्मनस्विनं रूपवन्तमात्मर्क्षे तीक्ष्णमयूखः ।
कुरुते महोग्रमुग्रकर्माणमाढ्यं प्रचंडचपलं भौमः ॥
कुरुते स्वराशिगः पुरुषं शशितनयोऽपि कुरुते कथापण्डितं चापि ।
काव्यश्रुतज्ञमाढ्यं शुभचेष्टवेषं वाक्पतिः स्वराशिस्थः ॥
दानवपूज्यः कुरुते कृषिवलं स्थिरवित्तं च ।
कुरुते शनैश्चरोऽपि मान्यमदुःखं स्वराशिगः पुरुषम् ॥"
"मित्रगृहेऽर्कः ख्यातं सुस्थिरहृदयं च दातारम् ।
मित्रर्क्षगः शशांकः सम्रुदयसौख्यं सुधनमानम् ॥
अंगारकोऽपि कुरुते सुहृद्धने रक्षणासक्तम् ।
शशिजः सुहृद्गृहगतः कुरुते चातुर्यहास्यधनवंतम् ॥
वचसामधिपः पूज्यं सतां च संमृष्टकर्माणम् ।
मित्रगृहे भृगुतनयः सुतप्रियं दयितवित्तञ्च ॥
इष्टसुतं भास्करजः कुरुते च परान्नभोजिनं पापम् ।"
"नीचे सविता कुरुते प्रेष्यं बान्धवजनावधूतं च ॥
हिमरश्मिरपपुण्यं रोगिणमतिदुर्भगं लोके ।
नीचस्थः क्षितितनयोऽनर्थव्यसनोपततमतिनीचम् ॥
नीचे हिमकरपुत्रः क्षुद्रं स्वबन्धुजनवद्धमतिवैरम् ।
नीचे गुरुः प्रकुरुते मलिनं भाग्यावमानमतिनीचम् ॥
असुरदयितः स्वतन्त्रं नष्टदारं विषमशीलं च ।
कोणो विपन्नशीलं विगर्हिताचारमध्वनिरतं च ॥"
"कुरुते शत्रुगृहेऽर्को निःस्वं विपरीडितं चापि ।
तुहिनमयूखः कुरुते हृद्रोगिणमरिगृहे नरं सततम् ॥
यद्भामयमरिभाजं विरलं रुधिरोऽतिदुर्भगं लोके ।
अज्ञानं वाग्दीनं बुधोऽरिभे नैकदुःखमतिदीनम् ॥
अरिभे गुरुर्विपत्ते पेयं विधनं च सद्वृत्तम् ।
शुक्रोऽरिगृहे भृतकं कृतन्त्रिमतिदुःखितं जनयेत् ॥
भास्करपुत्रः कुरुते मलिनं व्याध्यध्वशोकसंततम् ।"

इत्येतत्सर्वं राशिफलाध्यायेन कुलसममकुलमुख्येत्यादिना च सिद्ध्यतीत्यादिराश्याश्रयवशादुक्तानामंशकाश्रयवशादन्यथार्थं निरूपणीयमिति–

"नीचारिभांशे समवस्थितस्य शस्ते गृहे मित्रफला प्रदिष्टा ।"

इत्युक्तम् । एतदिष्टानिष्टमिश्रफला प्रदिष्टेत्युक्तम् । एवमिष्टानिष्टमिश्रफलं निरूपणीयम् । एवमिष्टानिष्टमिश्रफलानयनं सम्यग्बलिन इत्यर्धश्लोकद्वयेनोच्चत्रिकोणस्वसुहृदित्यादिकेनोपदिष्टाः । भावाध्याये वक्ष्यमाणेन श्लोकेनाचार्येण सूचितमत्र । अन्यशास्त्रेपि स्पष्टमुक्तमत्र मयोच्यते–

'अर्कादिग्रहान्परमनीचभागाद्विशोध्य शिष्टान्राशीन् दशभिर्भागान् विंशत्या च गुणयेत् पुनश्चेष्टाकेन्द्रं पूर्ववदानयेत् सायनांशोऽर्कस्त्रिराशिसहितोऽर्कस्य चेष्टाकेन्द्रम्।'

भानुस्फुटरहितश्चन्द्रस्य चेष्टाकेन्द्रम् । कुजादीनां तु मध्यस्फुटान्तरार्धम् । मध्यमे स्फुटाधिके शीघ्रोच्चयो भवेत् मध्यमे स्फुटादूने शीघ्रोच्चाद्विशोधयेत् पुनस्तस्माच्छीघ्रोच्चात्स्फुटं त्यजेत् । एवं चेष्टाकेन्द्रमानीय "शेषमण्डकियद्यइच्छ इष्टकफलं वरित्तवेणुम् अदजातकसंग्रहात् लेपक छिपोछईरुकरद ।" एवमानीते इष्टानिष्टफले तस्य ग्रहस्योच्चादिनिसर्गान्तं षट्प्रकारमानीय तेन बलसमूहेन गुणयेत् । ग्रहदशायामन्तर्दशायामायव्ययसंख्यासाधने स्याताम् । आभ्यां सर्वग्रहैरानीतां दृष्टिं पृथग्गुणयेत् एते अभिदृष्टिफलप्रदानकाले आयव्ययसाधने स्याताम् ।

अथ बलकालायव्ययसाधने उच्येते उच्चरश्मिबलमेवोच्चबलं, चेष्टारश्मिबलमेव चेष्टाबलं तयोर्योगदलं तत्षष्टिगतं साधितमनिष्टफलमिति विभागः । उच्चादिस्थानेनार्धहोरादिवर्गश्च युक्तमिष्टफलमनिष्टफलं च स्थानबलेन हत्वा गुरुज्ञार्काणां शतपञ्चकैः सितचन्द्रयोस्त्रिपापकेन्दुना मन्दभौमयोः षण्णवत्या विभजेत् । स्थान बलकालेप्यायव्ययसाधने भवतः । दिग्बलेन युक्तेष्टानिष्टफले दिग्बलेन हत्वा त्रिंशता विभजेत् । कालबलेनोक्तवत्संयुक्तेऽनिष्टफले इतरमलसंयोगमपि विधाय कालबलेन गुणयेदर्कज्ञाराणां विचन्द्रे विभजेत् । सितेन्द्वोः शतेन मन्दारयोः सप्तपष्ट्या विभजेत् । कालबलफलकाले आयव्ययसाधने भवतः । एवमयनबलयुक्तेष्टानिष्टफले अयनबलेन हत्वा सर्वेषामेव त्रिंशता विभजेत् । एवं चेष्टाबलयुक्ते–

"स्थानदिक्कालवीर्यघ्नं चेष्टायनबलाहृतम् ।
यदुक्तं संख्यया भाज्यं तत्कालायनसाधनम् ॥" इति ।

पुनः रविरविजगुरवः पञ्चषट्चन्द्रैः सितः शीतगुः कृतिचन्द्रैः शनिभौमौ षण्णवत्या बलिमता दिक्चेष्टायनवीर्ये तु दलमेव प्रकीर्तितम् एकैकशः सप्ताङ्गैः कालबले इति । अथ भावानामिष्टानिष्टफले उच्येते–

भावानां ग्रहवियुक्तानामधिपतिबलमेव फलं ग्रहयुक्तानां तु तस्य ग्रहस्य पापशत्रुनीचराशिश्चेदिष्टफलं भावसाधनेन हत्वा षष्ट्या विभजेल्लब्धमिष्टफलमेव प्राक्-

स्थितेऽनिष्टफले योजयेत् । स्थितस्य पापग्रहस्य स भाव उच्चादिपञ्चस्थानं चेद्वि-रोधपरित्यागन्याये प्राक्स्थिते फले भवतः । शत्रुराशिश्चेदुभयं न कर्तव्यमिति सम्प्रदायः । एवमाह यवनेश्वरः-

"भावानां स्वपतेः फले तु विहिते तत्र ग्रहश्चेत्तदा
हत्वा भावफले नवाङ्कभजिते लब्धेषु यो योजयेत् ॥
सौम्यश्चेदितरं रवेः परमथो पापस्तथैवान्यथा ।
दृग्वीर्योत्थफले तथैव च भवेदुच्चादिपूर्वक्रमात् ॥" इति ।

एतदुक्तं तत्राचार्येण भावाध्याये-

"फलमधिकमिदं यदत्र भावाद्भवनभनाथगुणैर्विचिन्तनीयम् ।"

इति वक्ष्यमाणेन ग्रन्थसंदर्भेण सिध्यति । इष्टानिष्टफलानयने कोऽपि सम्प्रदायः प्रदर्शितः । प्रकृतमनुसरामः, संज्ञानुरूपाणि फलानि चैषामित्यस्यायमर्थः राजानौ रविशीतगू इत्यादिना च ग्रहयोरपि भेदाध्याये शिष्टेन ग्रन्थेन च ग्रहमयं समस्त-मित्युक्तम् यथा-

"स्नाय्वस्थ्यसृक्त्वगथ शुक्रवसे च मज्जा
मन्दार्कचन्द्रबुधशुक्रसुरेज्यभौमाः ।"

इत्युक्ते ग्रहाणां धातूनां च समानामभेद उपदिष्टः । तथा सति मन्दस्य स्नायु-धातोश्च भेदे मन्दस्य स्नायुरिति संज्ञा वक्तव्या एवं संज्ञाध्यायोक्तं सर्वमुक्तं संज्ञा-नुरूपाणि फलानीति । तथा चोक्तम् । तत्र यद्ग्रहरूपं यदुक्तं तस्य फलदातृत्वे तत्फ-लपरिपाकः । यथा रवेरात्मप्रभावादि; चन्द्रस्य मनोगुणादि, कुजस्य सत्त्वं, बुधस्य वचनमित्यादि, रविशीतगाविति रविचन्द्रयोः राजकुलवासादि, कुजस्य दण्डनाय-कत्वाद्युद्धादि, बुधस्य यौवराज्यसेवादि, गुरुशुक्रयोरमात्यवृत्तिः, शनेः सेवादि,- प्रागाद्या इत्यत्र दिक्परिज्ञाने फलम् । बुधसूर्यसुतावित्यत्र पुंस्त्रीनपुंसकस्वभावादि; विप्रादित इति जातिभेदपरिज्ञाने, चन्द्रार्कजीवावित्यादि गुणस्वभावपरिज्ञाने, मधु-पिंगलदृगित्यादि रूपपरिज्ञाने, स्नाय्वस्थीत्यादि धातुपरिज्ञाने चोपयुज्यते तदुक्तं 'संज्ञानुरूपाणि फलानि चैषाम्' इति ॥ ६ ॥ ७ ॥

( वैतालीयम् )

उभयेऽधममध्यपूजिता
द्रेष्काणैश्चरभेषु चोत्क्रमात् ।
अशुभेष्टसमाः स्थिरे क्रमा-
द्धोरायाः परिकल्पिता दशा ॥ ८ ॥

उभयेऽधमेति अनेन सूत्रत्रयमपि सूच्यते। उभये चरमध्यमम्, उभये उभये मध्यमम्, उभये स्थिरं पूजितं, चरभे पूजितमध्यमाधमाः, चरे चरं पूजितं चरे स्थिरं स्थिरं मध्यमं चरे उभयमध्यमम्। अशुभेषु समाः स्थिरे क्रमात्स्थिरे स्थिरम्। समये पाकिदशायां क्रमादन्त्ये लग्नदशा शुभेति ॥ ८ ॥

(शार्दूलविक्रीडितम्)

एकं द्वौ नव विंशतिर्धृतिकृती पञ्चाशदेषां क्रमा-
च्चन्द्रारेन्दुजशुक्रजीवदिनकृद्दैवाकरीणां समाः।
स्वैःस्वैः पुष्टफला निसर्गजनितैः पक्तिर्दशायाः क्रमा-
दन्ते लग्नदशा शुभेति यवना नेच्छन्ति केचित्तथा ॥ ९ ॥

एकमिति। नैसर्गिकः स्वभावः शरीरिणामेष उक्तः। प्रथमवर्षे चन्द्रोऽधिपतिस्तस्य जलात्मकत्वान्निश्चेष्टता। द्वितीयतृतीययोर्भौमस्तस्य बालत्वादधिरसाभिरतिर्भवति। चतुर्थवर्षादारभ्य द्वादशवर्षान्तं ज्ञः। त्रयोदशवर्षादारभ्य द्वात्रिंशद्वर्षान्तं दानवपूज्यः। त्रयस्त्रिंशद्वर्षादारभ्य पञ्चाशद्वर्षान्तं गुरुः तस्य ज्ञानस्वरूपत्वाज्ज्ञानसुखाद्यनुभवः। पुनः सततयनन्तरं रविरधिपस्तस्य वृद्धत्वादात्मज्ञानसेवाकालः। पुनर्विंशत्युत्तरशतवर्षान्तं शनिरधिपस्तस्य मरणस्वरूपत्वान्मृतप्रायो भवेत्। 'स्वैः स्वैः पुष्टफला निसर्गजनितैः' इत्यनेन बाहुल्याद्यवस्थानुरूपं दशाफलप्राचुर्यं वक्तव्यं भवति। 'स्वैः स्वैः पुष्टफला निसर्गसमये' गणितानीता या निसर्गदशा पुष्टफला वाऽफला वा पुष्टा भवन्ति। प्राचुर्यमस्तीत्यर्थः। तथा च सारावल्याम्-

"स्वोच्चस्वकालबलिनः सम्पूर्णबलस्य या निसर्गयुता।
उत्तमशुभफलदा ग्रहस्य नित्यं दशा भवन्तीति ॥"

एवं चन्द्रादीनां क्रमेणातिबालकुमारयौवनस्थविरविपरीतवृद्धमृतात्मकत्वमनेनोक्तेन दर्शितं भवति ॥ ९ ॥

(शार्दूलविक्रीडितम्)

पाकस्वामिनि लग्नगे सुहृदि वा वर्गेस्य सौम्येऽपि वा
प्रारब्धा शुभदा दशा त्रिदशषड्लाभेषु वा पाकपे।
मित्रोच्चोपचयत्रिकोणमदने पाकेश्वरस्य स्थित-
श्चन्द्रः सत्फलबोधनानि कुरुते पापानि चातोऽन्यथा ॥ १० ॥

पाकेति। दशारिष्टभंगोऽनेनोच्यते। न केवलं जन्मकालादशा निरूपणीया दशाप्रारम्भकालादपि तत्रापि दशापतेर्गुणदोषवशाच्चिन्त्यते। पाकस्वामिनि दशानाथे

शाप्रारम्भे लग्नगते सुहृत्क्षेत्रगते दशानाथस्य वर्गे वा शुभर्क्षे सौम्ये वा शुभराशिगते ना या दशा प्रारभ्यते सा शुभा भवति । तथा च सारावल्याम्-

"प्रवेशे बलवान्खेटः शुभैर्वा संनिरीक्षितः ।
सौम्यादिमित्रवर्गस्थस्तदा शुभफलप्रदः ॥"

इत्यादित्रिदशषड्लाभे वा पाकपे उपचयस्थे दशापतौ प्रारब्धाः शुभा दशा ति । अथार्थान्तरमुच्यते-लग्नाद्द्वादशराशिभिर्ये भावा निरूप्यन्ते तेषामधिपाः पाकस्वामिनोऽर्कादयो ये ग्रहाः पित्रादिकारकास्ते च तत्तत्पित्रादिपदार्थपाकस्वामिनः एवं यस्य पदार्थस्य यः पाकस्वामी दशाप्रारम्भे तस्मिन् लग्नगते सुहृत्क्षेत्रगते तस्य वर्गे लग्नगे तद्दशायां तस्य शुभं भवति । मूहूर्तादावप्येवम् । तथा चोक्तम्-

"पुत्रादिभावसिद्ध्यर्थं क्रियाः पुंसवनादयः ।
सिद्ध्यन्ति भावनाथस्य वारक्षेत्रोदये कृताः ॥" इति ।

पुनः सौर्यमित्यादिना यानि शुभफलान्युक्तानि तेषां वृद्धिर्भवति, प्रश्नादावप्येव-मूह्याः । यः कारको यस्य फलस्य तस्मिन्लग्नगते बन्धुगते वा तस्य वर्गे लग्नगे तस्मिंन्स्ववर्गगे सौम्यक्षेत्रगते चोपचयगते वा तस्य फलस्याचिरात्सिद्धिर्वक्तव्या ति । मित्रोच्चोपचय इत्यादि 'चन्द्रः सत्फलबोधनानि कुरुते' इत्यत्र चाभिप्रायान्तर-मस्ति चन्द्रस्य हि फलानां बोधयितृत्वं, रवेर्दशाफलानां पाचकत्वं, 'राजानौ रविशीतगू' इत्युक्तत्वाच्चन्द्रार्काधीनत्वं कुजादीनामुक्तं पूर्वमेव व्याख्यातं शास्त्रान्तरे-

सविता दशाफलानां पाचयिता चन्द्रमा प्रबोधयिता ।
आदित्यचन्द्रवशगाः सर्वे ताराग्रहा ज्ञेयाः ॥" इति ।

अकस्मादेकस्यां दशायामुक्तानि शुभफलानि मित्रोच्चोपचयादिस्थानगते चन्द्रेऽनुभूयन्ते मित्रोच्चोपचयाद्न्यराशिगे चन्द्रे अशुभफलान्यपि भवेयुरिति द्रष्टव्यम् । चन्द्रस्य मित्रोच्चोपचयादिस्थितत्वं दशाप्रारब्धे निरूपणीयम् ॥ १० ॥

(शार्दूलविक्रीडितम्)

प्रारब्धा हिमगौ दशा स्वगृहगे मानार्थसौख्यावहा
कौजे दूषयति स्त्रियं बुधगृहे विद्यासुहृद्वित्तदा ।
दुर्गारण्यपथालये कृषिकरी सिंहे सितर्क्षेऽन्नदा
कुस्त्रीदा मृगकुंभयोर्गुरुगृहे मानार्थसौख्यावहा ॥ ११ ॥

प्रारब्धेति । सर्वत्र चन्द्रस्थितिवशादन्यग्रहाणां फलविभागभेदोऽस्तीति सूच्यते । अंशकाश्रयेऽप्येतदेव फलं वक्तव्यम् । चन्द्रस्य शुभत्वे सति अन्यग्रहाणां शुभत्व

विपरीते विपरीतत्वम्। चन्द्रबलवशादन्येषां स्वफलदानशक्तिरित्युक्तं भवति। तथा च श्रीपतिः-

"अमृतकिरणवीर्याद्वीर्यमाश्रित्य सर्वे
विदधति फलमेते खेचराः साध्वसाधु।
निजनिजविषयेषु व्याप्रियन्ते यथामू-
न्यलमिह मनसेवाधिष्ठितानीन्द्रियाणि ॥ ११ ॥"

(शार्दूलविक्रीडितम्)

सौर्यां स्वं नखदन्तचर्मकनकक्रौर्याध्वभूपाहवै-
स्तैक्ष्ण्यन्धैर्यमजस्रमुद्यमरतिः ख्यातिः प्रतापोन्नतिः
भार्यापुत्रधनारिशस्त्रहुतभुग्भूपोद्भवा व्यापद-
स्त्यागी पापरतिः स्वभृत्यकलहो हृत्क्रोडपीडामयाः ॥ १२ ॥

सौर्यामिति। सौर्यामित्यादिश्लोकपूर्वार्द्धेन शुभफलान्यपरार्धेनाशुभफलानि गदितानि। भूपाहवैर्धनमिति पूर्वार्धेनोक्तम्। 'शस्त्रहुतभुग्भूपोद्भवा व्यापदः' इत्यपरार्धेनोक्तम्। भूपाद्धनसिद्धिरपि भूपादापच कथमेतत्संभवत्युच्यते-सूर्यस्य बलपूर्णे पूर्वार्धेनोक्तं शुभफलम्। तथा च सारावल्याम्-

"भानुदशायां लभते नखदन्तचर्मौषधाद्यविपकलहैः।
अर्थागैरिव वह्निः क्रौर्यं नरेन्द्रहृदयाद्यैः ॥
चेन्नृपतेरर्थांप्तिर्धैर्यं भूपात्ततोऽधमं तैक्ष्ण्यम्।
ख्यातिः प्रतापविद्याचेष्टा धर्मे द्विभूपतित्वं च ॥
भृत्यार्थचौरचक्षुःशस्त्राण्युदरक्षितिपरा बाधा।
अथ पत्नीबन्धुजनैः संपीडा स्याच्च पापरतिः ॥
क्षुत्तृष्णार्तिः शोको हृत्पीडा पैत्तिका रोगाः।
गात्रच्छेदो भवति हि सूर्यदशायामनिष्टायाम् ॥" इति।

एवं सर्वग्रहदशायां यस्य ग्रहस्य शुभफलत्वमुक्तं तस्मिन्बलवति तद्भवति। बलहीने शुभं भवति। मध्यबले मिश्रमिति। एतदशासु शस्तास्वित्यादिग्रन्थेनाचार्येणेवोक्तं भवति। नन्वाचार्येणोक्तेभ्यो दशाफलेभ्योऽतिरिक्तानि दशाफलानि। तत्राचार्योक्तान्येव वक्तव्यानि, आहोस्वित्सारावल्यामुक्तान्युच्यन्ते निरूपणे तु सारावल्यामुक्तान्याचार्येणाप्युक्तानि भवन्ति। अत्रौषधविषाभ्यामर्थसिद्धिराचार्येणाप्युक्ता भवति। 'अकांशे तृणकनकोर्णभेषजाद्यैः' इत्यत्र भेषजेनार्थसिद्धिरुक्ता। 'भार्यापुत्रधनारिशस्त्र०' इत्यत्रारिशब्देन विषचौरादयोपि गृह्यन्ते। शस्त्रशब्देन गात्रच्छेदोऽपि

सूचित इत्यादि निरूप्यताम् । प्रश्नादावपि दुस्थे रवौ अशुभान्युक्तानि दशाफलानि वक्तव्यानि सुस्थे तु शुभानि वक्तव्यानि । कालात्मा दिनकृदित्यादि सत्त्वादिगुणविषयः । मधुपिंगलदृगित्यस्याकृतिविषयः । स्नाय्वस्थीत्यादि धातुविषयः । देवाम्ब्वित्यादि स्थानविषयः । वस्त्रं स्थूलमित्यादि वस्त्रविषयः । दिवाकरेन्द्वोरित्यादि पितृमातृनिरूपणविषयः । व्ययगृहगतश्चन्द्रो वामं हिनस्तीत्यादिना नयनारोग्यादि । सूर्ये काष्ठचतुष्पदेत्यादिना देह पीडादि पित्तप्रकृतिरित्यादिना धातुकीयः । योऽग्न्यधिपतित्वाज्ज्वरादिभयमग्निभयमग्निशस्त्रविषयं च दाहादि । अस्थ्यधिपतित्वादस्थिस्नायुहृत्क्रोडपीडामयाः । शिवदेवत्य शिवकोपः । सिंहराश्यधिपतित्वादपस्मार इत्यादि सर्वं प्रश्ने विचिन्तनीयम् ॥१२॥

( शार्दूलविक्रीडितम् )

इन्दोः प्राप्य दशां फलानि लभते मंत्रद्विजात्युद्भवा-
नीक्षुक्षीरविकारवस्त्रकुसुमक्रीडातिलान्नश्रमैः ।
निद्रालस्यमृदुद्विजामररतिः स्त्रीजन्म मेधाविता
कीर्त्यर्थोपचयक्षयौ च बलिभिर्वैरं स्वपक्षेण च ॥ १३ ॥

इन्दोरिति । क्षीरशब्देन जलं चोच्यते—कीर्त्यर्थोपचयक्षयौ पक्षवशादन्यत्सूर्यवशात् ॥ १३ ॥

( शार्दूलविक्रीडितम् )

भौमस्यारिविमर्दभूपसहजक्षित्याविकाजैर्धनं
प्रद्वेषस्सुतदारमित्रसहजैर्विद्वद्गुरुद्वेष्टृता ।
तृष्णासृग्ज्वरपित्तभङ्गजनिता रोगाः परस्त्रीकृता
प्रीतिः पापरतैरधर्मनिरतिः पारुष्यतैक्ष्ण्यानि च ॥ १४ ॥

भौमस्येति । भौमस्यारिविमर्दभूपसहजक्षित्याविकादीनां कारकत्वं चोक्तम् । मेषाधिपत्याच्छिरोरोगः । अग्निमयत्वान्नयनरोगः । अग्निशस्त्रविषयम् । पित्तशब्देनापस्मारभ्रान्त्यादि सूचितम् । भङ्गशब्देन च विकटाद्यपि सूचितम् । अरिशब्देन चौरोपि सूचितः । एतेषु दशाग्रहेषु बलवत्सु यैर्हेतुभिर्धनसिद्धिरुक्ता प्रतिकूलस्थानगतेष्वबलेषु तैर्हानिरपि तर्कणीया ॥ १४ ॥

( शार्दूलविक्रीडितम् )

बौध्यां दौत्यसुहृद्गुरुद्विजधनं विद्वत्प्रशंसायशो-
युक्तिद्रव्यसुवर्णवेसरमहीसौभाग्यसौख्याप्तयः ।

हास्योपासनकौशलं मतिचयो धर्मक्रियासिद्धयः
पारुष्यं श्रमबन्धमानसशुचः पीडा च धातुक्षयात् ॥ १५ ॥

बौद्धयामिति । यथा सवितृदशानिरूपणप्रकार उक्तस्तद्वत्सर्वेषामपि निरूपणीयः । दौत्यसुहृदित्यादिनोक्तः ॥ १५ ॥

( शार्दूलविक्रीडितम् )

जैव्याम्मानगुणोदयो मतिचयः कांतिप्रतापोन्नति-
र्माहात्म्योद्यममन्त्रनीतिनृपतिस्वाध्यायमन्त्रैर्धनम् ।
हेमाश्वात्मजकुञ्जराम्बरचयः प्रीतिश्च सद्भूमिपैः
सूक्ष्म्योहागहनाश्रमः श्रवणरुग्वैरं विधर्माश्रितैः ॥ १६ ॥

जैव्यामिति । हेमाश्वात्मजादीनामतिशयस्यापि गुरोः कारकत्वं ज्ञेयम् ॥ १६ ॥

( शार्दूलविक्रीडितम् )

शौक्र्याङ्गीतरतिप्रमोदसुरभिद्रव्यान्नपानाम्बर-
स्त्रीरत्नद्युतिमन्मथोपकरणज्ञानेष्टमित्रागमाः ।
कौशल्यं क्रयविक्रये कृषिनिधिप्राप्तिर्धनस्यागमो
वृन्दोर्वीशनिषादधर्मरहितैर्वैरं शुचः स्नेहतः ॥ १७ ॥

शौक्र्यामिति । गीतादीनां शुक्रस्य कारकत्वमवगन्तव्यं विवाहोपि मन्मथोपकरणशब्देनोक्तः ॥ ॥ १७ ॥ ॥

( शार्दूलविक्रीडितम् )

सौरीम्प्राप्य खरोष्ट्रपक्षिमहिषीवृद्धाङ्गनावाप्तयः
श्रेणीग्रामपुराधिकारजनिता पूजा कुधान्यागमः ।
श्लेष्मेर्ष्यानिलकोपमोहमलिनव्यापत्तितन्द्राश्रमा-
न्भृत्यापत्यकलत्रभर्त्सनमपि प्राप्नोति च व्यङ्गताम् ॥ १८ ॥

सौरीमिति । सौर्यां स्वामित्यादिसप्तश्लोकोक्तं प्रश्नादावप्युपयुज्यते ॥ ॥ १८ ॥

( उपजातिः )

दशासु शस्तासु शुभानि कुर्व-
न्त्यनिष्टसंज्ञास्त्वशुभानि चैवम् ।

मिश्रासु मिश्राणि दशाफलानि
होराफलं लग्नपतेस्समानम् ॥ १९ ॥

दशास्विति । बलाबलवशाद्दशानां शस्ताशस्तत्वं चोक्तम् । समबलिनः स्वतुङ्गे सम्पूर्णेत्यादिनोक्ताः संज्ञाः स्वतुङ्गभागे स्थितस्य सम्यग्बलिन इत्युक्तत्वात्स्थानबलेन तुङ्गाश्रयेणान्यैर्दिक्कालचेष्टादिभिर्बलैरसितस्येत्युक्तं भवति । तस्माद्बलवद्दशायाः कष्टत्वमिष्टत्वं चोच्यते । तथा चोक्तम्-

"सम्पूर्णवीर्यः सविता करोति राज्यादिसिद्धिं जनरञ्जनादीन् ।
पादोनवीर्येण युतोऽस्य पुष्टिं गृहीयवस्तुस्वजनाभिवृद्धिम् ॥
वीर्यार्धयुक्तो विपदाभिभूतिं पश्चात्सुखार्ति सुतदारसौख्यम् ।
पादेन वीर्येण युतोऽपि दुःखं व्याध्यादिकोपं शमनं च पश्चात् ॥
षड्भागवीर्यःस्वसुतार्तिदुःखं मूर्धागरोगं पिटकं च पश्चात् ।
इष्टासु हानिं त्वथ षोडशांशवीर्योऽतिदुःखं मरणं इनोनः ॥
चान्द्रीदशा पुष्टफलं ददाति स्त्रीराज्यवस्त्रान्नसुगन्धचन्धून् ।
पादोनजा स्त्रीग्रहणं जलात्तु धनं कफार्ति निजमातृसौख्यम् ॥
अर्धांशजा स्त्रीकलहं सुगन्धद्रव्यान्नपानादतिभीर्विरोधम् ।
स्त्रीभ्यो धनं पित्तमरुत्प्रकोपं यो षोडशांशाज्जलतोऽर्थहानिम् ॥
वृद्धाङ्गनासक्तिवधूविनाशौ वीर्यविंयुक्तौ विषबन्धघातम् ।
स्त्रीभीतिपायोमयपाण्डुरोगान्निरुन्नतामात्मजनैर्वियोगम् ॥
देहक्षयं वा प्रददात्यनिष्टां सम्पूर्णवीर्यस्य कुजस्य दोषम् ।
भूपुत्रसेनाधिपतित्वलाभं पूजा गुरूणां गुणवान्धनाढ्यः ॥
शूलं भवेत्पित्तमरुत्प्रकोपात्पादोनवीर्यः प्रददाति राज्यम् ।
सर्वैर्विरोधं कलहं ...
विपक्षवैरं च कुज ... ।
द्विजातिरोषास्पदवीर्ययुक्तः षड्भागवीर्यो वसनार्थहानिम् ॥
स्त्रीपुत्रदारास्यगदप्रदाता कुष्ठाक्षिकर्णोद्भवरोगपीडाः ।
शत्रुक्षतिं स्वल्पबलः करोति विहीनवीर्यो मरणप्रदः स्यात् ॥"

'शस्त्राभिभूताशानितो भयं च'इत्यादिवद्बलवशात्सौर्या स्वामित्यादिनोक्तानि फलानि विभज्य जातिकुलदेशावस्थानुरूपं वदेत् । ननु च बलवशादेव केवलं सर्वेषां ग्रहाणां शुभाशुभत्वमिति चेच्छुभानां शुभकृत्त्वमशुभानामशुभकृत्त्वं च कथं संपद्यते । उच्यते मन्दस्य तु शौरस्य पूर्वार्धेनाधारशुभफलमुक्तमपरार्धेनात्यन्तमशुभफलमुक्तम् । तस्मादेषां ग्रहाणां दशासु शुभफलमित्युक्तं भवति । बुधस्य दशाफलोक्तिस्त्रिभिः

पादैः शुभफलमुक्तमन्त्यपादेनाशुभफलमुक्तम्। गुरुदशायां प्रायशः शुभफलान्येवोक्तानि। अन्यैस्तु किंचिदशुभफलमुक्तम्। शुक्रस्यापि तद्वत्। तस्मादेषां त्रयाणां शस्तासु दशासु शुभफलानि वस्तूनि प्रायो भवन्ति। अनिष्टसंज्ञासु अशुभमल्पं शुभं न भवति। चन्द्रस्याप्येवं चिन्त्यम्। इयानत्र विशेषोऽभिप्रेतः। पुनरष्टमाधिपत्यादिदोषकृत्त्वं सर्वग्रहाणां साधारणमेव तत्रापि बलं चिन्त्यम्। अथ प्रश्नादौ दशासु शस्तासु शुभानि कुर्वन्ति। अवस्थासु मङ्गलासु च पृच्छकस्य शुभानि भवन्ति अनिष्टसंज्ञास्ववस्थास्वशुभानि भवन्तीति। 'होराफलं लग्नपतेः समानं' होराफलं जातकफलं समस्तं लग्नेशसमानं, लग्नेशस्य प्रश्नादावारूढेशस्य बलं विशेषाच्चिन्त्यमित्यर्थः॥ १९॥

(शालिनी)

संज्ञाध्याये यस्य यद्द्रव्यमुक्तं
कर्म्माजीवो यश्च यस्योपदिष्टः।
भावस्थानालोकयोगोद्भवश्च
तत्तत्सर्वं तस्य योज्यं दशायाम्॥ २०॥

संज्ञेति। अत्र दशाफलनिरूपणे न केवलं सौर्यां स्वमिति उक्तफलान्येव वक्तव्यानि। किन्तु बहुधा हि ग्रहस्य फलपरिपाकदशावशादन्तर्दशावशाद्राशिवशाद्योगवशादष्टकवर्गवशाद्द्रेष्काणादिवशादाश्रयवशाच्च यद्यत्फलं तत्सर्वं दशासु योज्यम्। 'संज्ञाध्याये यस्य यद्द्रव्यमुक्तं' इत्यत्र संज्ञाध्याये कालात्मा दिनकृदित्यादिग्रन्थेन यः पदार्थ उक्तः सोऽनुसन्धेयः। आदित्यादीनामात्मत्वराजत्वादि रक्तश्यामत्वादि च ताम्रादिवर्णाः पदार्थाश्च ताम्राणि द्रव्याणि च सत्त्वादिगुणाश्च विप्रादिजातयश्चान्योन्यविधानि ग्रहस्वरूपाण्युक्तानि तानि सर्वाणि दशासु योज्यानि। एतदुक्तं भवति। आदित्ये बलवति सति जातस्यादित्यदशायामात्मप्रभावः राजप्रसादस्ताम्रवर्णवस्तुसिद्धिस्ताम्रद्रव्यलाभः क्षत्रियकुलवासः सत्त्वगुणस्वभावः। 'मधुपिंगलदृक्' इत्यादि आकृतिस्थितिधातुपुष्टिः। आदित्ये बलहीने सति एतेषां हानिरपि चिन्तनीया। एवं चन्द्रादीनामपि स्वस्वरूपानुरूपमूह्यम्। योज्यमित्यत्र जातिवशादवस्थानुरूपं योजनीयमित्यर्थः। अथवा शास्त्रान्तरेषु ग्रहाणां द्रव्याण्युक्तानि तस्यार्के तनुस्थे इति लग्नेऽर्कस्य फलमुक्तं तत्र शूरशब्देन क्रियालस्यं क्रोधिता प्रचण्डत्वं मानित्वं पित्तप्रकृतित्वात्पैत्तिकत्वमल्पकर्फं च निरूपणीयं न केवलमेतावता 'समुपचयविपत्तिः सौम्यपापेषु सत्यः कथयति विपरीतं रिःफषष्ठाष्टमेषु' मूर्त्यादिभावेषु यत्र सौम्यास्तस्य भावस्योपचयं यत्र पापस्तस्य भावस्य

विपरीतं रिःफषष्ठाष्टमेषु शुभोपि नाशं करोति अष्टमे शुभो मरणं नाशं करोति षष्ठे शुभो रिपुनाशं करोति पापो विपरीतमिति सत्यः कथयति। आचार्यस्य मतं तु अष्टमव्यययोः सर्वे नेष्टाः षष्ठे शुभाः शत्रुनाशका इति कथमेतदवगतमिति चेदष्टमे गुरोर्नीच इति फलमुक्तं द्वादशे गुरोः खल इति षष्ठे गुरोरशुभ इति। शुक्रस्य गुरुवदित्युक्तम्। अष्टमे रवेः-'स्वल्पात्मजो निधनगे विकलेक्षणश्च' इत्युक्तम्। 'व्यये पतितस्तु रिःफे' इति कुजशन्योरादित्यवदित्युक्तम्। तस्मादष्टमद्वादशयोः सर्वे ग्रहा नेष्टा इति सिद्धं भवति। 'अन्त्यगते द्रविणीयः स्यात्' इत्युक्तत्वाच्छुक्रं विना सव ग्रहाः मृत्युव्ययर्योर्नेष्टा इत्यवगन्तव्यम्। तथा च स्वल्पजातके-

"पुष्णन्ति शुभा भावान्मूर्त्यादीन् घ्नन्ति संस्थिताः पापाः।
सौम्या षष्ठेऽरिघ्नाः सर्वे नेष्टा व्ययाष्टमगाः॥" इति।

एतानि दशायां योजनीयानि। तानि शास्त्रान्तरादानीय लिख्यन्ते तथाच सारावल्याम्-

"व्यालाग्निशैलकर्णिकसुवर्णविषवस्त्रभेषजादीनाम्।
म्लेच्छास्थिकारकाणां गिरिकाष्ठादेः प्रभुः सूर्यः॥
कुसुमानां भोज्यानां मणिरजतेस्त्वादिशङ्खवस्त्राणाम्।
रम्यविभूषणनारीघृततैलादिप्रभुश्चन्द्रः॥
रक्तोत्पलताम्राणां मनःशिलास्वर्णपात्राणाम्।
क्षितिनृपपतितनुमूर्च्छाभिघातचौरप्रभुर्भौमः॥
श्रुतिलिपिशिल्पकलादौ सुनिपुणता मन्त्रिदूतप्रभुहास्ये।
खगयुग्मादौ ख्यातिर्विविधौषधिमणिप्रभुः सौम्यः॥
माङ्गल्यधर्मपौष्टिकमहत्त्वशिक्षादियागपुरराष्ट्रे।
यानासनधान्यादेः सुवेश्मपुत्रप्रभुर्जीवः॥
वस्त्रमणिरत्नभूषणविवाहरम्येष्टगन्धमाल्यानाम्।
सुयुवतिनिधुवनविद्यासखित्वरजतप्रभुः शुक्रः॥
त्रपुशीसकाललोहककुधान्यमदमृतिदैन्यवन्यादेः।
व्याधीनामति वृद्धिः सुदीनदीक्षाप्रभुः सौरिः॥"

एवं ग्रहाणां द्रव्यमुक्तं कर्माजीवफलं शूरस्तब्ध इत्यादिवृत्तानां ताम्रदगित्यादिस्थानफलं चन्द्रे रूपसुधावित्यादि दृष्टिफलं राजयोगचन्द्रयोगादिग्रहयोगप्रव्रज्यायोगारिष्टयोगनिर्याणयोगाश्रययोगाद्यावर्क संफलं दशासु योज्यम्। तत्र भावफलाध्याये स्वल्पं सत्फलमुक्तम्। तथाहि-

'शूरस्तब्धो विकलनयनो निर्घृणोऽर्के तनुस्थे।'

यद्यदा सर्वाणि वाक्यानि तत्र विभागोऽस्ति। तदुच्यते-

"सुहृदरिपरकीयस्वर्क्षतुंगस्थितानां फलमनुपरिचिन्त्यं लग्नदेहादिभावैः।"
अनुपरिचिन्त्यं फलदग्रहबलपुष्टिः किन्तु-
फलमधिकमिदं यदत्र भावाद्भवनभनाथगुणैर्विचिन्तनीयम्॥"
भावराशेर्भावाधिपस्य च भावस्थग्रहस्य च बलाधिक्याद्भावफलमधिकं भवति।
सुहृदरिपरकीयस्वर्क्षतुंगस्थितानां फलं कथमनुपरिचिन्त्यमिति चेत्तदर्थमुक्तम्-
"उच्चत्रिकोणस्वसुहृच्छत्रुनीचगृहार्कगैः।
शुभसंपूर्णपादोनदलपादाल्पनिष्फलम्॥" इति।
तथा चोक्तमन्यत्र-
"स्वोच्चे प्रदीप्तः सुखितस्त्रिकोणे स्वस्थः स्वगेहे मुदितः सुहृद्भे।
शान्तस्तु सौम्यग्रहवर्गसंस्थः शक्तो मतोऽसौ स्फुटरश्मिजालः॥"
ग्रहाभिभूतः स निपीडितः स्यात्खलस्तु पापग्रहवर्गसंस्थः।
सुदुःखितः शत्रुगृहे ग्रहेन्द्रो नीचेतिभीतो विकलोऽस्तयातः॥"
"दीप्तः पूर्णं विधत्ते शुभफलमुदितः पादहीनस्ततस्तः
स्वस्थः पादैर्विहीनं त्रिभिरथ मुदितः शान्तशक्तौ च तद्वत्।
अत्यल्पं तत्र योऽन्ये विदधति विकलो भीतसंज्ञश्च कष्टम्
भीतापादीप्तनिष्टास्त्वशुभमपि तथा व्युत्क्रमेण ग्रहास्ते॥"
तस्माद्भावाधिपतिबलमाश्रित्य राशिबलं चावलोक्य फलं वक्तव्यम्।
तथा चोक्तम्-
"अधिपः सर्वभावानां कारकः परिकीर्तितः।
कर्ता भावगतः प्रोक्तस्तथा तद्भाववीक्षितः॥
बलहीनेऽरिनीचस्थे दुःस्थे वा भावनायके।
भावस्य सम्पदं कर्तुं न शक्यं भावमाश्रितैः॥"
लग्नादिद्वादशभावानां स्वाधिपतिना सौम्यग्रहैश्च योगसंभवे सति वृद्धिर्भवति
शत्रुग्रहैः पापैरपि दृष्टियोगसंभवे हानिर्भवति। तथा च षट्पञ्चाशिकायाम्-
"यो यो भावः स्वामिदृष्टो युतो वा
सौम्यैर्वा स्यात्तस्य तस्यास्ति वृद्धिः।
पापैरेवं तस्य भावस्य हानि-
र्निर्देष्टव्या पृच्छतां जन्मतो वा॥"
आचार्येणाप्युक्तमनिष्टयोगाध्यायेऽयमर्थः प्रोक्तस्तथा तत्प्रकारः-
"लग्नात्पुत्रकलत्रभे शुभपतिप्राप्तेऽथवालोकिते।
चन्द्राद्वा यदि सम्पदस्ति हि तयोर्ज्ञेयोऽन्यथा संभवः॥"

अयं विधिर्न केवलं पुत्रकलत्रविषयः सर्वभावसाधारणः स्यात्। बह्वर्थोऽयं श्लोकः पुत्रकलत्रभे शुभपतिप्राप्ते शुभैः पत्या वा प्राप्ते एतैरालोकिते वा तयोः सम्पदस्ति यद्वा शुभानां पती शुभपती शुभप्रवरौ गुरुशुक्रावित्यर्थः गुरुशुक्राभ्यां पुत्रकलत्रभे प्राप्तेऽथवालोकिते वा यदि तयोः सम्पदस्ति, अथवा शुभपतिः शुभं भवनं आयस्थानं तत्पतिः प्राप्तावलोकिते पुत्रकलत्रभे यदि तयोः सम्पदस्ति अर्थाद-शुभपतिप्राप्तावलोकिते पुत्रकलत्रभे यदि तयोरभावो ज्ञेयः अन्यथा सम्भव इति-वचनादशुभमष्टमं मरणस्थानत्वात्पतिरष्टमेशस्तेन युतदृष्टो भावो नाशं व्रजति। तथा चोक्तम्-

"यद्भावस्थोऽष्टमपस्तद्भावो नश्यते न सन्देहः।" इति।

लग्नस्य लग्नेशस्य वा पुत्रकलत्रेशयोगदृष्टौ तत्संभव इति। एवं भावयोगबलादा-श्रयबलात्सुहृत्सौम्यवीक्षणादन्यथा भवति। तथा च सारावल्याम्-

"योगाश्रयबलयोगात्सौम्यादिपुनिरीक्षणाच्चैव।
उच्चादिभवनसंस्थैर्ग्रहैश्च फलमन्यथा भवति॥" इति।

चन्द्राद्वेति। चन्द्रस्य बलिष्ठत्वे तस्मात्फलसिद्धिः। अत्र ग्रहाणां कारकत्व-मस्ति। तथा चोक्तम्-

"आत्मप्रभावशक्तिश्च पितृचिन्ता रवेः फलम्।
मनोबुद्धिप्रभावं च मातृचिन्ता तु चन्द्रतः॥
भ्रातृसत्त्वगुणान्भूमिं भौमेन तु विचिन्तयेत्।
वाक्प्रगल्भं च विज्ञानं बुधेन परिचिन्तयेत्॥
गुरुणा देहपुष्टिः स्याद्बुद्धिपुत्रार्थसंपदः।
शुक्राद्विवाहकर्म स्याद्भोगस्थानं च वाहनम्॥
आयास्यांधिदुःखानि मरणं च शनैश्चरात।"

एतदस्मिन्नेव पूर्वोक्तेन सिद्ध्यति कथमिति चेत्कालात्मा दिनकृदित्यादिना श्लोकार्धेन दिवार्कशुक्रावित्यादिना च सह क्षित्यादिकाजैर्नामित्यनेन च हेमाश्वात्म-जकुञ्जराम्बरचय इत्यनेन च विज्ञातव्यमिति उग्रग्रहैरित्यनेन श्लोकेन शुक्रस्य भार्या-कारकत्वं पूर्वं च सिद्धिश्च मदन इति बीजक्षेपः। शीघ्रगं गीतरतीत्यनेन निरूपितम्। एवमुग्रग्रहैरित्यनेन भार्यारिष्टम्। सप्तमाधिपतेरप्येवमूह्यम्। गुरोः पञ्चमाधिपते-श्चात्पुत्रारिष्टमवगन्तव्यम्। पुंस्त्रीविभागस्तु युग्मयुग्मेषु ताविन्यनेन श्लोकेन निरूप-पितव्यः। बुधशन्योर्नपुंसकत्वे तद्वर्ग तत्सम्बन्धे तद्वादिसिद्धिः एतेषां ग्रहाणां वर्गे स्थितादिसिद्धिः। पुत्राणां संख्या दृष्ट्या समानं प्रवदेदित्यादिना ज्ञेया। अथ

'लमाद्यपारिगतयोः' इति येन कारकत्वं चन्द्रार्कयोः । 'द्यूनस्थयोर्नवमपंचमसंस्थयोर्वा शुक्रार्कयोः' इत्यत्रार्कशब्देनांगारकोऽपि गृह्यते । तथा च सारावल्याम्–

"द्यूने कुजभार्गवयोर्जातः पुरुषो भवेद्धि कलदारः ।
धीधर्मास्थितयोर्वा नो विकलं पण्डिताः प्राहुः ॥"

- इत्यरिष्टयोगाध्यायोक्तमपि दशायां योज्यम् । अथ स्थानशब्दस्यार्थं उच्यते । वृत्तातान्नदृगित्यत्राध्यायोक्तफलराशितन्नाथस्वभावा अत्रोच्यन्ते । वृत्तातान्नदृगिति कुजधर्मः । उष्णशाकलघुभुगिति मेषधर्मः । क्षिप्रप्रसादः सेनाधिपधर्मः । अटनः कामी दुर्बलजानुरंगनावल्लभः कुनखी व्रणाङ्कितशिरास्तोये च भीरुरिति मेषधर्मः । अन्ये सेनापतिधर्माः । एवं चन्द्रस्य अन्येषु राशिपूक्तं फलमपि । अन्येषां राशिफलानि तन्नाथस्वभावा इत्यवगन्तव्याः । तेन राशौ बलवति तदधिपे च बलसहिते युक्तग्रहे च बलवति कथितफलानां समग्रप्राप्तिः, राशौ बलहीने उभयमपि न वाच्यम् । ग्रहे च बलहीने तथैव तदुक्तमाचार्येण–

"बलवति राशौ तदधिपतौ च स्वबलयुतः स्याद्यदि तुहिनांशुः ।
कथितफलानामविकलदाता शशिवदतोऽन्येष्यनुपरिचिन्त्याः ॥"

- एतत्स्थानबलमपि दशायां योज्यमिति । आलोकनशब्दस्यार्थउच्यते । चन्द्रे भूपबुधावित्यादिना मेषाद्येकैकराशिगतस्य चन्द्रस्यान्यग्रहवीक्षणफलान्युक्तानि तथा मेषाद्यंशगतस्य चन्द्रस्यापि तान्युक्तानि पूर्वशास्त्रेषु विस्तरतः कथितानि । इह तु संक्षेपादेकैकं फलमेव कथितं तेनापि शुभाशुभविभागो विज्ञायते । ततः पूर्वशास्त्रैरप्यवगन्तव्यानि चन्द्रस्य तावत्–

"शिशिरकरसमागमेक्षणानां कथितफलं प्रवदन्ति लग्नजातम् ॥"

'भेन्द्वर्कास्पदपतिगांशनाथवृत्त्या' इति च वक्ष्यति । 'उदयरविशशाङ्कप्राणिकेन्द्रादिसंस्थाः' इत्युक्तं च पूर्वं तस्माल्लग्नचन्द्रार्काणां जातकफलनिरूपणे प्रधानोऽपकारित्वमिति ज्ञायते । अन्येषां ग्रहाणां च प्रतिराशिदृष्टिफलमस्ति तत्पूर्वशास्त्रेषु कथितं च कालात्मा दिनकृदितिश्लोकरूपेण सूत्रेण वीक्ष्यमाणग्रहं च तदाश्रितराशिं च वीक्ष्य ग्रहं च निरीक्ष्य तेषां दृष्टिफलं स्वबुद्ध्या तर्कणीयम् । पूर्वशास्त्राणि चावगम्य तत्फलं निर्णेतव्यम् । चन्द्रस्यांशवीक्षणस्य इयान्विशेषः–

"वर्गोत्तमः स्वपरगेषु शुभं यदुक्तं
तत्पुष्टमध्यलघुताशुभमुत्क्रमेण"

इत्युक्तमंशकफलं निरूपणीयमिति सूचनार्थमेवंभूतं दृष्टिफलमपि स्वदशायां योज्यम् । अथ योगशब्दस्यार्थ उच्यते तत्र प्रथमं राजयोगा उक्ताः 'प्राहुर्यवना' इत्यादिना 'त्रिभिरुच्चगतैः क्रूरैरपि महीपतिर्भवति' इति । 'स्वोच्चेषु षोडश नृपा' इति फलभेदोऽस्ति अतो योगानां विभागेन संख्याकरणम्–

"अपि खलकुलजाता मानवा राज्यभाजः" इत्यादिश्लोकेन कानिचित्फलानि जातिदेशावस्थानुरूपं वक्तव्यानि कानिचिदवश्यं भवितव्यतया वक्तव्यानि तद्विभागो लक्षणानां बलाबलविभागत इति सूचितम् । राजयोगस्य ग्रहस्यातिबलं तद्दशायां राज्यप्राप्तिस्तदुपरि वक्ष्यति-

"कर्मलग्नगतपाकदशायां राज्यलब्धिरथवा प्रबलस्य ।
शत्रुनीचग्रहयातदशायां छिद्रसंश्रयगता परिकल्प्या ॥"

दशमगतस्य दशायां राज्यप्राप्तिं वदेत्—तथा चोक्तम्-

"बलयुक्तो दशमगतस्तस्य दशायां विनिर्दिशेद्राज्यम् ।
तत्रोच्चे वर्गगतो यदि स तु संपूर्णभूमिभाग्भवति ॥
उच्चस्थो बलयुक्तः सौम्यः सौम्येन शोभनेन युतः ।
तस्य दशायां राज्यं प्राप्नोत्यन्तर्दशायां च ॥
जन्मसमये ग्रहेन्द्रा बहुफलयुक्तास्तथा सुस्थाः ।
तेषां दशासु मतिमान्संपत्तिं निर्दिशेद्यथायोग्यम् ॥
अन्यांश्च राजयोगानालोच्य बलाधिकस्य वर्षेषु ।
राज्यं ब्रूयान्मतिमान्कारकविहगस्य पाके वा ॥
नीचेऽस्तगेऽरिराशौ रन्ध्रे व्ययभेऽथवा बलैर्हीने ।
तस्य दशायां भ्रंशं विनिर्दिशेद्बन्धनं चापि ॥"

इति राजयोगाश्चिन्त्याः । एतेषां राजयोगानां भंगोपि निरूपणीय इति अन्येषु शास्त्रेषु विस्तरतोऽन्यैराचार्यैर्निर्दिष्टः । आचार्येण राजयोगोक्तप्रकारवैपरीत्येन चिन्तनीय इति नोक्तः । 'प्राहुर्यवनाः स्वतुंगगैः क्रूरैः' इत्यत्र स्वनीचगैः क्रूरैरितिवैपरीत्येन राजयोगभंगः । तथा च सारावल्याम्-'सर्वे क्रूराः केन्द्रे नीचारिगताः न सौम्ययुतदृष्टाः । शुभदा व्ययरिपुरन्ध्रैस्तदा विभंगो भवेन्नृपतेः ।' इति ननु केवलं 'प्राहुर्यवनाः स्वतुंगगैः क्रूरैः' इत्यस्य वैपरीत्यमेवात्रोक्तं तेषां क्रूराणां केन्द्रगतत्वं सौम्यग्रहाणां दृष्टयुतत्वं च शुभानां व्ययरिपुरन्ध्रगतत्वं चोपकारितयोक्तं कथमेतदवगम्यते । उच्यतेऽवगमोपायः क्रूराणामवगतत्वं योगवैपरीत्येन केन्द्रगतत्वं 'स्रक्सर्पौ कथितौ पराशरेण' इत्यत्र सर्पयोगलक्षणेन सौम्यायुतदृष्टित्वम् । 'अशुभगदिता योगा याप्या भवन्ति शुभेक्षिताः' । इत्यनेन तर्कणीयम् । वक्रार्कजार्कगुरुभिरित्यत्रापि वैपरीत्येन राजयोगावगमः । तथा च सारावल्याम्-

"कुजार्कजीवार्किभिरत्र नीचे द्वाभ्यां त्रिभिर्वा कतमे विलग्ने ।
निशाकरे वृश्चिकराशिसंस्थे वंशीयुते राजककोऽतियोगः ॥"

इति घर्मोत्तमगते लग्न इत्यत्रापि वैपरीत्यं ग्राह्यम् । तथा च सारावल्याम्-

"लग्नं गणोत्तमाख्यं न खेचरैर्दृश्यते यदा भङ्गः।
भवति हि नृपयोगानां दारिद्र्याय प्रजातस्य ॥
अष्टमस्यादिभागे राश्यादिषु वा शशी यदा क्षीणः।
एकेनापि न दृष्टो शुभेन भंगस्तदा नृपतेः ॥"

'स्वोच्चत्रिकोणगैर्बलसंस्थैः' इत्यत्रापि वैपरीत्यमवगन्तव्यम्। तथा च सारावल्याम्-

"घटोदये नीचगतैस्त्रिभिर्ग्रहैर्बृहस्पतौ बन्धुगते च नीचगे।
एकोपि नोचेऽप्यशुभस्य भंगः प्रयान्ति नाशं शतशो नृपोद्भवाः॥"

इत्यादिशास्त्रान्तरादवगन्तव्यम् ऊहशक्तिरस्ति चेदस्मादेवावगन्तव्यम्। *राजयोगसम्भवे उत्पातानां बाहुल्ये सति राजयोगभंगः। तथा च सारावल्याम्-*

"उल्कायाः पतने चैव निर्घातव्यतिपातयोः।
केतोश्च दर्शने चैव यान्ति नाशं नृपात्मजाः॥
अन्यैः क्रूरोत्पातैस्त्रिशंकुपातोदयाद्यैश्च।
सद्यः प्रयाति नृपतेर्योगो यदि भानुजो रवेर्लग्ने ॥
कर्तारो नृपतीनां यदि वै युद्धस्य कांक्षिणो बलिनः।
क्रूरैर्विजीर्णदेहा विघ्नं जनयन्ति राजयोगस्य ॥"

इत्यादिग्रहाणां नीचगतत्वं विशेषतश्चिन्तनीयम् इयानत्र विशेषोऽभिनेतः ग्रहाणामुच्चत्रिकोणक्षेत्रांशगतत्वं वक्रगतत्वं चोच्चक्षेत्रादिराशिगतत्वं चिन्तनीयम्। 'बलयोगात्फलमंशकर्क्षयोः' इति राश्यंशयोः साम्यं पूर्वमेवोक्तम्। अपिच-

"ग्रहयुक्तनवांशराशितुल्यं बहुसाम्यं समुपैति सत्यवाक्यम्"

इति सत्यमतप्रशंसयाप्यंशकप्राधान्यमेवात्र व्यक्तीभवति। चन्द्रयोगास्तु हित्वार्कमित्यादिग्रन्थेनोक्ताः। तत्र सुनफाअनफादुर्धरायोगास्त्रयः 'स्वयमधिगतवित्त' इत्यादिना तेषां फलं च कथितम्। तत्र योगकर्तृभेदेन फलभेदोऽस्ति शास्त्रान्तरेषु विस्तरतो निर्दिष्टः।

अत्र तुल्साहशौर्यधनसाहसवानित्यादिना ग्रहस्वभावः कथितः तेन च पूर्वोक्तफलेन विचार्य फलं वाच्यम्। तदर्थं 'त्रिंशत्स्वरूपाः' इत्यादिना संख्याकरणम्। अत्र योगकर्तारो ग्रहाः केन्द्रगताश्चेद्योगस्यातिशुभत्वं कल्पयेत्। तथा च सारावल्याम्-

"चन्द्राद्ग्रहैर्निगदिताः सुनफादयः स्युः
केन्द्रस्थितैर्यदि भवन्ति च तत्र योगम्।

विश्वम्भरापतिकुलेषु महत्सु जाता
योगेषु तेषु मनुजेश्वरतां लभन्ते ॥"

चतुरस्रे केन्द्रे वा पापैर्दुर्धरायोगश्चेदशुभफलमपि चिन्तनीयम् 'पापान्तरस्थे निधनाहिबुकद्यूनसंस्थे च चन्द्रे' इति स्वेनैवोक्तत्वादेते योगा न यदा भवन्ति तदा केमद्रुम इति केषांचिन्मतम् । अन्येषां गर्गप्रभृतीनां पक्षे तु सुनफादीनामुक्तलक्षणाभावे विलग्नकेन्द्रे अथवा चन्द्रे केनचिद्ग्रहेण युक्ते केमद्रुमाभाव इति । तथा च सारावल्याम्-

"एते न यदा योगाः केन्द्रे ग्रहवर्जिते शशाङ्के च ।
केमद्रुमोऽतिकष्टः शशिनि समस्तग्रहादृष्टे ॥"

इति केन्द्रनवांशकेषु च वदन्तीति केचिच्छुभकीर्तिप्रभृतयः केन्द्रेषु गतैर्ग्रहैर्योगान्वदन्ति केचिज्जीवशर्मप्रभृतयो नवांशकेषु गतैर्ग्रहैर्योगान्वदन्ति । चन्द्राच्चतुर्थस्थितैरनफा चतुर्थदशमस्थितैर्दुर्धरा इति ।

तथा च श्रुतकीर्तिः-

"चन्द्राच्चतुर्थसंस्थैः सुनफानफा दशमस्थैः ।
उभयस्थैर्दुर्धरा केमद्रुमसंज्ञितोऽन्यैः स्यात् ॥" इति ।

पुनश्चन्द्राक्रांशनवांशराशेर्द्वितीयराशिगतैः सुनफा द्वादशराशिगतैर्दुर्धरा । तथा च जीवशर्मा-

"यद्राशिसंज्ञे शीतांशुर्नवांशे जन्मनि स्थितः ।
तद्द्वितीयस्थितैर्योगः सुनफाख्यः प्रकीर्तितः ॥
द्वादशे त्वनफा ज्ञेया द्वितीयद्वादशस्थितैः ।
प्रोक्तोऽयं दुर्धरायोगोऽन्यथा केमद्रुमो मतः ॥" इति ॥

केचित्केन्द्रनवांशकेषु च वदन्तीत्यनेन व्याख्यातोऽयमर्थ इतिव्यक्तं भवति किमर्थमाचार्येणैव कृतं तन्मतानादरणायेति कल्पनीयम् । वा 'उक्तिप्रसिद्धा न ते' इतिवचनाद्ग्रहाणां बलपौष्कल्ये तन्मतमपि कदाचित्संगच्छेत इति मतं च प्रकाशितम् । 'अन्यमते शुभकृदुडुपोऽहि दृश्यमूर्तिः' इति । अह्नि दृश्यार्धगतश्चन्द्रोऽशुभकृद्भयशोकादिकृत् । गलिततनुश्च अपरपक्षगतचन्द्र इत्यर्थः । अन्यथान्यद्व्याख्यम्-दृश्यार्धगतः शुभकृत्पूर्णमाणतनुः शुभश्च । तथा च सारावल्याम्-

"उत्पातकं कृततनुर्निशि चाप्यदृश्यो
दृश्यो दिवा शिशिरगुर्भयशोकदाता ।
एवं स्थितः समफलं पृथिवीपतित्वं
जातोऽन्यथा प्रकुरुते परिपूर्णमूर्तिः ॥" इति ।

गलिततनुरह्नि शुभ इत्यन्यशास्त्रान्तरेऽप्युक्तम्-

"पक्षे सिते भवति जन्म यदि क्षपायां
कृष्णेऽथवाहनि शुभाशुभदृश्यमानः।
तच्चन्द्रमा रिपुविनाशगतोऽपि यत्ना-
दापत्सु रक्षति पितेव शिशून्न हन्ति ॥" इति

नन्वयमर्थोऽशुभकृदुडुप इत्यादिना कथमुच्यते अह्नि दृश्यमूर्तिरुडुपोऽशुभकृदह्नि दृश्यमूर्तिरिति अह्न्यनुदित इत्यर्थः पक्ष एव घटते गलिततनुः कृष्णपक्षचन्द्रः अह्नि शुभकृदित्यर्थः अन्यथाऽन्यदूह्यम्। रात्रौ शुक्लपक्षचन्द्रः शुभोऽपरपक्षचन्द्रोऽशुभ इति संगच्छते। 'अहनि निशि च चन्द्रे स्वाऽधिमित्रांशके वा सुरगुरुसितदृष्टे वित्तवान्स्या-त्सुखी च' इति निरूपणीयम्। अत्राहनि गुरुदृष्टौ निशायां सितदृष्ट इति क्रमो विवक्षितः सुनफायोगास्तु समस्तसाधारणत्वेन निरूपणीयाः। द्विग्रहयोगास्तु। 'तिग्मांशुर्जनयत्यथेन्दुसहितो यन्त्राश्मकारं नरम्' इति यन्त्राणां मध्यरतमनृत-वधबन्धनादिरतं श्मश्रुकारो नापितवद्वृत्तिः 'कथितफलैः परतो विकल्पनीयाः' इति। परतोऽपरे परतस्त्रिग्रहयोगादयः कथितफलैरूहेन कल्पनीया इति। अर्कचन्द्रयो-गजमर्ककुजयोगजं चन्द्रकुजयोगजं च फलसमूहेन कल्पनीयमिति। इति त्रिग्रह-चतुर्ग्रहपञ्चग्रहयोगफलं शास्त्रान्तरैश्चिन्त्यमित्यर्थः। प्रव्रज्यायोगास्तु 'एकस्थैश्चतुरा-दिभिः' इत्यादिनोक्ताः। चतुरादिभिश्चतुर्भिः पञ्चभिः षड्भिः सप्तभिर्वा बलयुक्तैः सर्वैर्नास्तगैर्न नीचैः पृथग्वीर्यगैः स्वोच्चादिगतैः प्रव्रज्याबलिभिः समाश्चेदादि बलवन्तस्तैः समं प्रव्रज्या भवन्ति। मावे यज्ञेत्पादिदीक्षाविशेषकथनं वन्याशनाः। तथा च सारावल्याम्-

"अग्नीनां परिचारका गिरिनदीतीराश्रमे तापसाः
सूर्याराधनतत्परा गणपतेर्भक्ता उमायाश्च ये।
गायत्रीं जपतां वने नियमिनां गंगाभिषेकार्थिनां
कौमारव्रतमिच्छतामधिपतिस्तेषां सदा भास्करः ॥"

वृद्धशब्देनोक्तमर्थं वक्ष्यामि। सारावल्यामुक्तम्-

"वृद्धश्रावकभस्मधूलिधवलाः शैवव्रते ये स्थिता
बह्वीं पातकितां गता भगवतीभक्ताश्च निःसंगिनः।
शुद्धास्ते खलु सोमनाम्नि निरताः कापालिका निष्ठुरा-
स्तेषां नायकतां गतः शशधरः खट्वाम्बुनाभ्युक्षितः ॥"

"उपासका बुद्धसमाश्रयं गताः शिखां विना पाण्डरभिक्षवश्च ये।
सुवाससो रक्तपटा जितेन्द्रियाः प्रभुः सदैषां क्षितिजः प्रकीर्तितः ॥
आवेशिनां कुहकिनां समयाविका ये ये दीक्षितास्तनुभृतो गरुडे च तंत्रे।
ये वै मयूरपिशिताशनयोश्चयुक्तास्तेषां शशांकतनयोऽधिपतिर्नियुक्तः ॥"

"एवं स्त्रीसहिता वदन्ति मुनयो दण्डान्कषायाम्बरान्-
वानप्रस्थमुपागताः फलपयोभक्ताश्च ये भिक्षवः ।
गार्हस्थ्येन तु संस्थिता नियमिनः सुब्रह्मचर्यं गता-
स्तेषां नायकतां गतः सुरगुरुस्तीर्थेषु ये स्नातकाः ॥"
"पशुपतियज्ञे दीक्षां व्रतेषु ये नित्यमेव संयुक्ताः ।
चरकाणामपि तेषां नेता प्रकीर्तितः शुक्रः ॥
पाखण्डव्रतनिरता दिगम्बराश्चैकभिक्षवो ये च ।
तेषामाधिपतिरार्किः श्रावकतरुमूलिनश्च दुस्तपसः ॥"

इति कारकयोगाश्चिन्त्याः । स्वक्षेतुंगमूलत्रिकोणगा इत्यत्र स्वर्क्षांशगानां च ग्रहणमस्ति । तथा च सारावल्याम्-

"तुंगसुहृत्स्वगृहांशे स्थिता ग्रहाः कारकाः समाख्याताः ।
मेषूरणे रविरिति विशेषतो वक्ति चाणक्यः ॥
लग्नगतः सुखसंस्थः कामस्थश्चापि कारकाः सर्वे ।
एकादशेऽपि केचिद्वाञ्छन्ति तन्मतं मुनींद्राणाम् ॥"

इत्यत्र स्वोच्चत्रिकोणस्वर्क्षगैः कुजादिभिस्ताराग्रहैरुचकादयः पञ्चमहायोगाः शास्त्रान्तरेषु प्राधान्येन कथिताः । अत्र तु 'अशून्येषु च केन्द्रेषु कारकाख्यग्रहेषु च' इत्यत्रान्तर्भूता भवन्ति तेन विशेषो न प्रदर्शितः । ते पञ्च महायोगाः प्राधान्येन निरूपणीयाः । तथा च सारावल्याम्-

"स्वक्षेत्रेऽथ चतुष्टये सुबलिभिः स्वोच्चस्थितैर्वा ग्रहैः
शुक्रांगारकमन्दजीवशशिजैरेतैर्यथानुक्रमात् ।
मालव्यो रुचकः शशोऽथ कलितो हंसश्च भद्रस्तथा
सर्वेषामिति विस्तरान्मुनिमतं संकल्प्यते लक्षणम् ॥"

योगकर्तृकग्रहानुरूपं फलं च वक्तव्यं चन्द्रयोगाध्याये 'उत्साहशौर्यधनसाहसवान् महींजे' इत्यादिग्रन्थेन तर्कणीयं यत्फलं तस्यातिशयोऽत्र योगानामूह्यः विशेषादपि सारावल्यां फलमुक्तं तदत्र लिख्यते-

"बलरहितेन्दुरविभ्यां युक्तैर्भौमादिभिर्ग्रहैः ।
योगैर्न भवन्ति भूमिपाला दशासु तेषां सुखार्थयुताः ॥"
"न स्थूलोष्ठो न विषमवपुर्नातिरिक्तांगसन्धि-
र्मध्ये क्षामः शशधरमतिर्हस्तिनादः सुगण्डः ।
व्यादीर्घाक्षः समरदो जानुदेशाप्तपाणि-
र्मालव्योऽयं विलसति नृपः सप्ततिर्वत्सराणाम् ॥"

"दीर्घास्यः स्वच्छकान्तिर्बहुरुधिरबलः साहसोदात्तकार्य-
श्चारुभ्रूर्नीलकेशः श्रवणपथगतो मन्त्रविच्चौरनाथः।
रक्तश्यामोऽतिशूरो रिपुबलमथनः कम्बुकण्ठः प्रधानः
क्रूरो भक्तो नराणां द्विजगुरुविनतः क्षामसञ्जातजंघः॥"
"खट्वाङ्गपाशवृषकार्मुकवज्रवीणाचक्राब्जहस्तचरणश्च शतांगुलश्च।
मन्त्राभिचारकुशलस्तुलया सहस्रं मध्ये च तस्य कथितं सुखदैर्घ्यतुल्यम्
"विन्ध्याचलसह्यगिरीन् भुनक्ति सप्ततिं च नागरान्देशान्।
शस्त्रानलकृतमृत्युः प्रयाति देवालयं रुचकः॥"
"तनुद्विजास्यो द्रुतगः शशोदयः शठोऽतिशूरोऽभिकृतिप्रधानः।
नीचादिदुर्गेषु नदीषु सक्तः कृशो नरो नातिलघुः प्रसिद्धः॥"
"पर्यंकशंखहलशस्त्रमृदंगमाला
वीणोपमा यदि करे चरणे च रेखा।
वर्षाणि सप्ततिमितानि करोति राज्यं
मात्यंतिकक्षितिपतिः कथितो मुनीन्द्रैः॥"
"रक्तास्योन्नतनासिकः सुचरणो हंसः प्रसन्नेन्द्रियो
गौरः पीनकपोलरक्तकरजो हंसध्वनिः श्लेष्मलः।
शंखाब्जांकुशदाममत्स्ययुगलश्रक्रांगमालाघटै-
श्चिह्नैः पादकरांकितो मधुनिभे नेत्रे च वृत्तं शिरः॥"
"पातीह देशान्खशशूरसेनान् गान्धारगंगायमुनान्तरालान्।
जीवेन्नवानां दशवर्षसंख्यं पश्चाद्वनान्ते समुपैति नाशम्॥"
हंसे-"शार्दूलप्रतिमाननो द्विजपतिः पीनोरुवक्षस्थलः
सद्वाक् पीनसुवृत्तबाहुयुगलस्तत्तुल्यमानोच्छ्रयः।
कामी कोमलसूक्ष्मरोमनिकरैः संरुद्धगण्डस्थलः
प्राज्ञः पंकजगर्भपाणिचरणः सत्त्वाधिको योगवित्॥"
शंखादिकुञ्जरगदाकुसुमेषुकेतुचक्रांगलांगलविचिह्नितपाणिपादः
पत्रागुरुद्विपदगो प्रथमाम्बुसिक्तहकुंकुमप्रतिमगन्धतनुः सुघोणः॥
शास्त्रार्थविद्धृतियुतः समसंहतभ्रूर्नागोपमो भवति वस्तु निगूढगुह्यः।
सत्कुक्षिधर्मनिरतः सुललाटजङ्घो धीरस्थिराव्यसितकुंचितकेशपाशः"

भद्रयोगः कारके योगे जन्मशुभमिति। तथा-

"नीचकुले सम्भूतः कारकविहगैः प्रधानतां याति।
क्षितिपतिवंशसमुत्थो भवति नरेन्द्रो न सन्देहः॥" इति।

आश्रययोगास्तु 'कुलसम' इति 'स्वभैकवृद्धयां' अत्र स्वशब्दास्त्रिकोणादीनामप्युपलक्षणार्थः। ग्रहाणां पृथक्पृथगुच्चक्षेत्राद्याश्रयफलं शास्त्रान्तरेपूक्तम्। अत्र युगपत्स्वक्षेत्राद्याश्रयफलमुच्यते। पृथक्पृथगाश्रयफलन्तु पूर्वं स्थानबलाध्याये कथितमित्यत्र नोक्तम्। कुलसमकुलमुख्यादीनां ग्रहानुगुणं फलं निरूपणीयम्। अत्र स्वभावादिस्थितोऽग्रलग्नजन्मराशितदंशेशानामन्यतमश्चेत्कुलसमत्वादगुणं विशेषेणापि वक्तव्यम्। 'जनयति नृपमेकोऽप्युच्चगो मित्रदृष्टः' पूर्वश्लोकेन स्वभस्थितस्य मित्रभास्थितस्य च फलमुक्तमनेन श्लोकेन उच्चस्थितस्य फलमुच्यते तत्रायं विशेषः। स्वभास्थितेषु सप्तग्रहेषु एवं नृपत्वं मित्रभावस्थितेष्वपि तथैवोक्तम्। उच्चस्थित एकोऽपि अनन्यापेक्षः नृपं जनयति उच्चप्राधान्यमत्रापि द्योतितम्। 'प्रचुरधनसमेतं मित्रयोगाच्च सिद्धिम्' इत्यनेन योगादृष्टेः प्राधान्यं सूचितम्। विवस्वित्यादि विवसुर्निर्द्रव्यो विसुखश्च बहुलो नीचश्च मूढो मूर्खश्चाधर्मरतो व्याधितो निश्चेष्टः भृतकश्च। बन्धुतप्तः प्रभिन्नदारः अगृहश्च दासश्च वधसमेतः सर्वेभ्यो दुरितसमे परान्नभोक्ता। परहिंसको दरिद्रो दुःखभाक् पतितः सर्वदा दुरितफलमनुभवतीत्यर्थः। शत्रुगृहेषु फलानामीषन्न्यूनत्वमनेन पूर्वदशासु शत्रुनीचगृहयातदशायां 'छिद्रसंश्रयदशा परिकल्प्या' इत्यनेनापि राजयोगफलभंग ऊह्यः इति।

निर्याणयोगस्तु 'मृत्युर्मृत्युगृहे इति कालमृत्यवादिगुलिकादयश्चिन्त्याः। शैलाग्राभिहतस्य' इत्यादिना मृतिभेद उच्यते। स हि चन्द्रपापग्रहैः प्रायशो भवति योगानामभावे द्वाविंशतिमस्तु कारणमित्युच्यते-

"मेषाद्ये द्रेष्काणे क्रूरग्रहवीक्षिते न शुभदृष्टे।
अम्बुविषमपित्तकृतं मरणं नृणां समादेश्यम्॥"

इत्यादिना सारावल्यामुक्तेन ग्रन्थेन द्रेष्काणैर्मरणं चिन्त्यम्। तथा च सारावल्याम्-

"उदयाद्द्वाविंशतिमो द्रेष्काणो भवति कारणं मृत्यौ।
तस्याधिपतिर्भावान्निर्याणं सूचयेत्स्वगुणैः॥
मेषाद्यैर्द्रेष्काणैः क्रूरग्रहवीक्षिते न शुभदृष्टे।
अम्बुविषमपित्तकृतं मरणं नृणां समादेश्यम्॥
विद्याद्द्वितीयभागे तज्जलकृत्यावनाद्यैश्च।
एवं तृतीयभागे तडागकूपप्रपाताद्वा॥
पराहकरभखरोष्ट्रैर्मृत्युर्ज्ञेयो वृषाद्यैर्वा॥
पित्ताग्निपातचौरैर्द्वितीयभागे वृषेश्चैव॥
विद्यात्तृतीयभागे यानासनवाजिपातकृतम्।

पुंसां भवति हि मरणं शिरसि महावेधकृतमेव ॥
मिथुनाद्यतृतीयांशे कासश्वासप्रसलिलोद्भवो भवति ।
मृत्युकर्यभिपकृ वृषभाद्वा तृतीयके सान्निपाताद्वा ॥
वनवासिनश्चतुश्चरणात्सर्पपतनात्तथारण्ये ।
भवति हि मृत्युः पुंसामंत्ये भागे तु जनुषश्च ॥
नरवणमद्यपानात्कण्टकदोषेण वा तथा स्वमात् ।
भवति हि कर्कटकाद्येर्मृत्युर्नृणां तृतीयभागे तु ॥
अभिशापाद्विषपानान्मध्यत्र्यंशे भयं समादिष्टम् ।
प्रमेहगुल्मस्रंसनप्रमुखैर्दोषैस्तथाऽन्त्ये ॥
सलिलाद्विवादरोगात्सिंहाद्ये त्र्यंशके भवेन्मृत्युः ।
मध्यतृतीयभागे जलमयकृतो वनोद्देशे ॥
विषशस्त्रयोगदोषैर्नित्यं विषमान्नपानाद्वा ।
अन्त्ये सिंहत्र्यंशे भवति हि मृत्युर्न सन्देहः ॥
आद्ये कन्यात्र्यंशे मस्तकरोगात्तथा निलान्मृत्युः ।
बालाच्च शैलदुर्गे मध्ये भूपात्मजादथवा ॥
करवरशस्त्रतोदादभिशापात्स्त्रीकृतान्नपानाद्वा ।
अन्त्ये कन्यात्र्यंशे नृणां मृत्युः समादिष्टः ॥
आद्ये वणिक्त्रिभागे युवतिचतुष्पदनिपातदोषेण ।
मध्ये कुञ्जरदोषैरन्त्ये व्यालाम्बुदोषेभ्यः ॥
आद्येऽलिनस्त्रिभागे विषशस्त्रस्त्रीरसान्नपानकृतः ।
मध्ये कटिवस्तिभागस्रंसनदोषैर्भवति मृत्युः ॥
अन्त्ये तृतीयभागे इष्टकपाषाणपातवेदनया ।
भवति हि मरणं यानान्नृणां जङ्घास्थिभंगकृतम् ॥
चापस्याद्ये त्र्यंशे गुदानिलसमुद्भवैर्विविधरोगैः ।
मध्ये विषगरदोषैर्भवत्यनिलकृतैर्वा मृत्युः ॥
अन्त्ये तृतीयभागे जलमध्ये तत्समुत्थितैर्वापि ।
मृत्युर्नृणां दृष्टो जरामरणदोषसम्भूतः ॥
मकराद्ये द्रेष्काणे नृपहिंस्रव्याघ्रकारणो मृत्युः ।
ऊरुविनाशकृतो वा जलचरसविषकशफसर्पात् ॥
दहनास्त्रतस्करेभ्यो ज्वरातिसारादमानुषजनात् ।
अन्त्ये मकरत्र्यंशे नृणां मृत्युर्जनैरूह्यः ॥

कुम्भे प्रथमत्र्यंशे स्त्रीभ्यस्तेयात्तथाजठररोगैः ।
ज्ञेयो मृत्युर्नृणां पर्वतवनगहनविपद्भिर्वा ॥
मध्ये स्त्रीकृतदुःखैर्गुह्यजरोगैर्भवति मृत्युः ।
अन्त्ये मृत्युश्चिन्त्यश्चतुष्पदमुखरोगकृतैर्भवेत्पुंसाम् ॥
त्र्यंशे मीनयुगाद्ये तुल्यग्रहणीप्रमेहयुवतिभ्यः ।
जङ्घास्थलजै रोगैर्गजग्रहकृते समादिशेन्मृत्युम् ॥
नौभेदाञ्जनमध्ये पड्द्रेष्काणाद्द्वितीयजातानाम् ।
अन्त्ये भवति हि मृत्युः कुत्सितरोगैर्न सन्देहः ॥''

एवं द्रेष्काणो मरणकारणमित्युक्तम्-तस्याधिपतिर्भावोऽपि वा स्वगुणैर्निर्याणं प्रयच्छतीति । अधिपतिर्द्वाविंशतिद्रेष्काणाधिपतिर्भावोऽष्टमाधिपतिः । अथवा तस्याधिपतिर्निर्याणाधिपतिर्दुःखाधिपत्याच्छनिः द्वाविंशतिद्रेष्काणेशाष्टमेशमन्दास्तद्युक्तराश्यंशपाश्च गुलिकराश्यंशपाश्च निर्याणे चिन्त्याः । ननु द्वाविंशतिद्रेष्काणाष्टमेशमन्दयुक्तराश्यंशपाः गुलिकराश्यंशकेशाश्चिन्त्या इत्याचार्येण न प्रसज्यते नैषदोषः आचार्येण प्रसक्तमेव कथमिति चेदुच्यते तस्याधिपतिरित्यत्र 'दुःखं दिनेशात्मज' इति संज्ञाध्याये कथितत्वान्मरणस्यात्यन्तदुःखत्वान्मरणकारकः शनिरित्युक्तं भवति गुलिकस्य शनैश्चरांशकसम्भवत्वाद्गुलिकोऽपि मरणकारक इति विज्ञायते 'क्रूरेऽष्टमे विश्वता निधनेश्वरोंऽशे यस्य स्थितो वयसि तस्य समे प्रदिष्टा' इति निधनेश्वरप्रयुक्तांशकेशस्य मरणकारकत्वमुक्तं तस्मात्सर्वेषां निधनकारकग्रहाणां तद्युक्तांशकेशानां च मरणकारत्वमूह्यम् । एतदुक्तं भवति जन्मकाले लग्नाद्बलयुताचन्द्राद्वा योऽष्टमो राशिस्तत्र 'मृत्युर्मृत्युग्रहेक्षणेन बलिभिस्तद्धातुकोपोद्भव' इत्युपदेशात्तस्याधिपो वा शनैश्चरेण वा गुलिकेन वा भावोपि वा इत्युपदेशादष्टमेशेन वा एतैर्युक्तराश्यंशकैर्वा मरणं चिन्त्यमिति एतेषां यो दुर्बलोऽनिष्टस्थानगतश्च भवति तस्य दशायामन्तमुक्तं व्याध्यादिहेतुभिर्मरणं चिन्त्यमिति । मरणकाले शनैश्चराद्यवस्थानं चैषां राशित्रिकोणेषु निरूपणीयम् । पूर्वं सद्योमरणाध्यायप्रोक्तयोगानां सम्भवे योगकर्तृग्रहदशायां च मरणं चिन्त्यम् । इत्थं प्रायशो योगशब्दार्थ उक्तः ।

अथ प्रश्नविषयेऽप्ययं श्लोकश्चिन्त्यः । संज्ञाध्याये ममास्य कार्यस्य प्राप्तिः कथमिति पृष्टे यस्य यद्द्रव्यमुक्तं तस्य द्रव्यं संनिहितवस्तु दैवज्ञार्पितमुक्तं वा वचनं यदि जीवो यत्कर्माजीवेपूपादिष्टं श्रूयमाणं 'भावस्थानावलोके योगोद्भवं च' इत्यत्र भावः प्रच्छकस्य स्वभावश्चेष्टा च हर्षशोकादयश्च स्पर्शश्च चेषं च स्थानं स्थितिप्रदेशो वा आलोकयोगोद्भवं च प्रष्टुर्योग आश्रयः सहायो वा एवमादिप्रश्नकाले यद्यज्ज्ञायते तत्सर्वं तस्य प्रच्छकस्य शुभाशुभनिरूपणदशायां योज्यमिति ॥ २० ॥

( इन्द्रवज्रा )

छायाम्महाभूतकृतां च सर्वेऽभिव्यंजयन्ति स्वदशामवाप्य ।
क्ष्म्वग्निवाय्वम्बरजान्गुणांश्च नासास्यदृक्त्वक्छ्रवणानुमेयान् २१॥

छायामिति । जातकं न प्रायिकमिति कथयति पुरुषस्य शरीरादौ प्रत्यक्षमेव दृश्यत इति स्वमहाभूतच्छायां स्वदशासु व्यञ्जयति । महाभूतग्रहयोरपृथग्भावात्तस्माच्छरीरे महाभूतच्छाया द्रष्टव्या । तथा चाचार्यकृतसंहितायाम्-

"छाया शुभाशुभफलानि निवेदयन्ती
लक्ष्या मनुष्यपशुपक्षिषु लक्षणज्ञैः ।
तेजोगुणान्बहिरपि प्रविकाशयन्ती
दीपप्रभा स्फटिकरत्नघटस्थितेव ॥"

तथा चान्यत्र-

"स्निग्धाद्विजत्वं नखरोमकेशा छाया सुगन्धा च महीसमुत्था ।
तुष्ट्यर्थलाभाभ्युदयान्करोति धर्म्मस्य चाहन्यहनि प्रवृद्धिम् ॥ १ ॥
स्निग्धासिता च हरिता नयनाभिरामा सौभाग्यमार्दवसुखाभ्युदयान्करोति ।
सर्वार्थसिद्धिजननी जननीव चाप्या छायाफलं तनुभृतां शुभमादधाति ॥२॥
चण्डाधृष्या पद्महेमाभवर्णा युक्तं तेजो विक्रमैः सप्रतापैः ।
आग्नेयीति प्राणिनां स्याज्जयाय क्षिप्रं सिद्धिं वाञ्छितार्थस्य धत्ते ॥ ३ ॥
मलिनपुरुषकृष्णापापगन्धानिलोत्था :
जनयति वधशोकं व्याध्यनर्थार्थनाशान् ।
स्फटिकसदृशरूपा भाग्ययुक्तात्युदारा
निधिरिव गगनोत्था श्रेयसां स्वच्छवर्णा ॥ ४ ॥"

न केवलं दशास्वेव महाभूतस्वभावो जायते । जन्मसमयेऽपि एकैको जन्तुर्जायते । तथा च सारावल्याम्-

"शब्दार्थविन्यासपटुः प्रगल्भो विज्ञानयुक्तो विवृतास्यभागः ।
छिद्रांगसन्धिः कृशपाणिपादो वामप्रकृत्या पुरुषोऽतिदीर्घः ॥
सत्त्वेन वायोः पुरुषः कृशांगः क्षिप्रं च कोपस्य वशं प्रयाति ।
कृत्यैकबुद्धिभ्रमणे रतश्च जातोऽसितो भूपतिरप्रधृष्यः ॥
शूरः क्षुधार्तश्चपलोऽतितीक्ष्णः प्राज्ञः कृशो गौरतनुर्विरोधी ।
विद्वान्सुमानी बहुप्रेक्षणश्च वह्निस्वभावः पुरुषोतिकायः ॥
लावण्यभावो जलजप्रकृत्या प्रियाभिभाषी द्रवभोजनश्च ।
खलस्वरूपो बहुमित्रपक्षः क्षोणीपतिर्नातिचिरं प्रगल्भः ॥

कर्पूरजात्युत्पलपुष्पगन्धो भुनक्ति भोगांश्चिरलब्धसौख्यः ।
सिंहासनेसुस्थिरचित्तवृत्तिर्महीस्वभावः पुरुषः सुतत्त्वः ॥२१॥" इति ।

( मालिनी )

शुभफलददशायां तादृगेवान्तरात्मा
बहु जनयति पुंसां सौख्यमर्थागमञ्च ।
कथितफलविपाकैस्तर्कयेद्वर्तमानां
परिणमति फलाप्तिस्त्वप्रचितास्ववीर्यैः ॥ २२ ॥

शुभफलदेति । दशासु बहुविधासु यया दशया भुज्यमानफलसंवादतां गृह्णीयादिति द्योतयितुमयं श्लोकः । अन्यथा त्रिप्रकारं दशानयनमनर्थकं भवति ननु गणितानीतदशाफलभुक्तफलयोः संवादेनैव दशा प्रमाणी कर्तव्या चेत्फलानां दशानयनं कर्तव्यं द्वादशवर्षादधस्तनवयस्कस्य बालस्य केवलमरिष्टयोगेनायुर्नाशोपदेशात् । यद्येवं दशायाः प्रामाण्यं न भवति कथं तेन दशानयनप्रमाणभूता एवं स्यादायुःस्थितिर्जन्मकालादारभ्य प्रथमे वर्षे केवलं सद्योऽरिष्टैरेवायुः खण्ड्यते । द्वादशवर्षात्पूर्वमरिष्टयोगैर्दशासापेक्षैर्द्वासप्ततिवर्षात्पूर्वं मध्यायुर्योगसापेक्षैर्दशाभेदैरत ऊर्ध्वं विंशत्यधिकशतात्पूर्वं केवलं दशाया अत ऊर्ध्वममितायुर्योगैः सर्वत्र निर्याणग्रहस्थितिरन्वेष्टव्या—

"योगे स्थानं गतवति वलिनश्चन्द्रे स्वं वा तनुगृहमथवा ।"

इत्युक्तत्वात्तस्मादुक्तफलनिरूपणेनैव दशा प्रमाणी कर्तव्या । अपि च समकालजातयोर्द्वयोः शरीरिणोरायुः संवादादपि दशाभेदश्चिन्तनीयः । अयं त्वेवमुपदेशेशः काचिदपि दशा प्रमाणीकर्तव्या नैष दोषोऽन्येन केनैव विज्ञायते आचार्याभिप्रायो भवता न विदितः ।

प्रथमं 'मयपवनमणित्थशक्तिपूर्वैः' इत्यादिश्लोकेन बह्वाचार्यवैषम्यं चिन्तयताचार्येण सत्योपदेशः प्रवरोऽत्रेति अंशकदशापि कथिता । पुनः कश्चिद्विषये जीवशर्मदशासंगच्छत इति सापि दर्शिता । तस्मात्त्रिषु दशापरिग्रहप्रकारेषु केनचित्प्रकारेण भुक्तफलसंवादो भवतीति । नहि 'कथितफलविपाकैस्तर्कयेद्वर्तमानाम्' इत्युपादिष्टम् । तस्मात्परीक्ष्य निर्णतव्यमित्युक्तं भवति । वक्ष्यति च नष्टजातकाध्याये—नष्टजातकमिदं मया यद्बहुप्रकारं निर्दिष्टं ग्राह्यम् । अतस्तच्छिष्यैः परीक्ष्य यन्नाययया भवतीति । गणितस्कन्धेऽपि परीक्षणेनैव दृग्ग्रहणग्रहयोगादीनां संवादो जायते । अन्यथा परस्परभिन्नानां पञ्चसिद्धान्तानां निर्माणं निरर्थकं भवतीति । शुभफलददशायां तादृगेवान्तरात्मा इत्यत्रान्तरात्मान्तःकरणं मनस्तादृक् शुभं प्रसन्नं रागद्वेषादिकलुषितं न

भवतीत्यर्थः। तथा च यात्रायां प्रष्टव्यो दैवविदा विस्रब्धमुपह्वयेन्नराधिपतिः। रिपुविजयप्रणिधाने प्रतिभवतः किं मनः कुरुते। ब्रूयान्मनः प्रोत्सहते हर्षयते ततश्चैनम्। चित्तानुकूलतासिद्धिलक्षणम्। तत्रायं श्लोकः—

"शुभाशुभानि सर्वाणि निमित्तानि स्युरेकतः।
एकतश्च मनो यातुस्तद्धि शुद्धं जयावहम्॥"

इत्यादि। तस्मात्सर्वेभ्यो लक्षणेभ्यो मनः प्रमाणीकर्तव्यम्। ततो मनः प्रसन्नं चेद्दशापि शुभफलदेति विज्ञातव्या। मनः पुंसां सौख्यमर्थागमं च बहु जनयति। अनयानुगामिनो मनसः प्रवृत्त्या सर्वशः सौख्यमर्थागममभिमतार्थाः सर्वतः सिद्ध्यन्तीत्यर्थः। अन्तराख्येति पाठे शुभफलददशायां शुभफलदान्तर्दशा चेत्तयोरुभयोः संयोगाद्बहुसौख्यमर्थागमं च पुरुषा लभन्त इत्यर्थः। 'कथितफलविपाकैस्तर्कयेद्वर्तमानाम्।' इत्यत्र कथितफलानावश्यभावित्वं सूचितम्। तदेव दृष्टीकर्तुं—"परिणमति फलोक्तिः स्वप्नचिन्तास्ववीर्यैः" इत्युक्तं फलवचनं परिणमत्येवं दशाफलं पुरुषेणावश्यं भोक्तव्यमित्यर्थः। किन्तु अवीर्यैर्बलरहितग्रहैर्यत्फलमुक्तं तत्स्वप्नचिन्तासु परिणमति पुरुषेण किमप्युक्तं न भवतीत्यर्थः। 'उच्चफलोक्तिः स्वप्नचिन्तास्ववीर्यैः' इति शुभाशुभसामान्यप्रयुक्तमुच्चत्रिकोणेत्यादिश्लोकेन फलंसंपूर्णपादोनदलपादाल्पानिष्फलमिति शुभमुक्तम्। तस्मात् पद्यद्वयकथनयोरैकात्म्यं स्यादुच्यते एवं हि मन्यते 'कथितफलविपाकैस्तर्कयेद्वर्तमानाम्' इत्यत्रोच्चत्रिकोणेत्यादिश्लोकेन नैर्मल्यप्रसङ्गाद्दर्कग्रहस्य शुभफलप्रदस्य नैष्फल्यं वर्तमानदशातर्केण कथितफलविपाकैरनुपपन्नं स्यादित्याशंकां परिहरन् 'परिणमति फलोक्तिः स्वप्नचिन्तास्ववीर्यैः' इति कथयति तस्माच्छुभं प्रत्येवमुदितम्। 'दशासु शस्तासु शुभानि कुर्वन्त्यनिष्टसंज्ञास्वशुभानि चैवम्' इति पूर्वमेवोपदिष्टत्वात्स्वप्नचिन्तास्विति स्वप्नाश्च बहुविधा भवन्ति। तथा च यात्रायाम्—

अनुक्त आद्ये स्मृत आयुषोंशे शेषे त्रिभागे गतिजः प्रदिष्टः।
प्रकोपपापग्रहपाकचिन्तादृष्टाभिचारोद्भवगुह्यकोत्थाः॥
गतेष्वजात्यन्तरसङ्गिसंगः स्वप्नेष्वनूक्ते गतिजे च नित्यम्।
धातुप्रकोपादनिलात्मकस्य वर्षादितुंगाम्बरलङ्घनानि॥
पित्तेऽधिके कांचनरत्नमालां दिवाकराग्निप्रभृतीनि पश्यन्।
श्लेष्माधिकश्चेन्दुप्रशुभ्रपुष्पं सरित्सरोजाम्बुविलङ्घनानि॥
जघन्यमध्यप्रथमे निशांशे प्रावृट्शरन्माधवसंज्ञिते च।
काले मरुत्पित्तकफप्रकोपात्साधारणं स्यात्खलु संनिपाते॥
दशासु चोक्तं ग्रहपाकजातं चिन्तासु दृष्टं च यथा तथैव।
बीभत्सरस्वादिभवोऽभिरामे पित्तोद्भवो गुह्यकजः प्रदिष्टः॥

आयुष्यचिन्ताग्रहदोषदृष्टान्यभीक्ष्णकर्माणि च निष्फलानि ।
दृष्टदृष्टपूर्वाद्रकथितांश्च तद्वदन्यत्र लोके कथिता विशेषाः ॥" इति ।

अन्यशास्त्रान्तरेऽप्युक्तम्-

"दृष्टः श्रुतोऽनुभूतश्च प्रार्थितः कथितस्तथा ।
भाविजो दोषजश्चैव स्वप्नः सप्तविधः स्मृतः ॥"

इत्यत्र भाविजस्य स्वप्नस्य विशेषोऽस्ति प्रत्यक्षवद्भवति वचनान्तः स्वप्ननियमात्सदसत्फलाप्तिः । 'स्वप्ने शुभाशुभफलं कथितं नराणामुद्देशमात्रमिहताननुवर्णयामि ।' इति ग्रहपाकजस्वप्नो न भाविफलसूचक इत्यत्रापि सिद्धं भवति प्रश्नादौ तु 'शुभफलददशायां तादृगेवान्तरात्मा' इत्यत्र प्रच्छकस्य भावस्थानालोकयोगेषु शुभेषु दैवज्ञस्यान्तरात्मापि प्रसन्नश्चेद्बहुसौख्यमिष्टार्थागमनं च भवति । 'कथितफलविपाकैस्तर्कयेद्वर्तमानाम्' इत्यत्र प्रच्छकेन यत्फलं कथितं पृष्टं च तस्य विपाकैस्तदानीं दृष्टैः श्रुतैर्वा वर्तमानदशामवस्थां तर्कयेत् यथा जलप्रश्ने जलदर्शनश्रवणादिना वर्षा भवतीत्युच्यते । एवं फलमुच्यते तत्सर्वमेव निरूपणीयमित्येवं स्वप्नचिन्तास्ववीर्यैर्लक्षणं प्रत्यक्षं यद्भवति यत्स्फुरतीत्यादिनोक्तम् । तादृशस्य फलमवश्यं भवति । कालभेदत्वात्कालश्चोच्यते मिहिरेणास्मदाचार्येण-

"आद्ये वर्षा वत्सरार्धाद्द्वितीये यामे पाको वर्षपादात्तृतीये ।
मासात्पाकः शर्वरीपश्चिमांशे सद्यः पाको गोविसर्गेषु दृष्टे ॥"

अत्र स्वप्नानां शुभाशुभत्वमन्यस्माच्छास्त्रान्तरादवगन्तव्यम् । चिन्तास्ववीर्ये तु प्रच्छकस्य प्रश्नसौष्ठवं दैवज्ञस्य सावधानत्वं चेत्यलमतिप्रसङ्गेन ॥ २२ ॥

(वसंततिलका)

एकग्रहस्य सदृशे फलयोर्विरोधे
नाशं वदेद्यदधिकम्परिपच्यते तत् ।
नान्यो ग्रहः सदृशमन्यफलं हिनस्ति
स्वां स्वां दशामुपगताः स्वफलप्रदाः स्युः ॥ २३ ॥

इति श्रीवराहमिहिरविरचिते बृहज्जातके दशान्तर्दशाध्यायोऽष्टमः॥८॥

एकग्रहस्येति । शुभाशुभयोः फलयोर्विरोधे सदृशे तयोर्द्वयोः फलयोर्नाशं वदेत् शुभाशुभयोः फलयोर्यदधिकं शुभमशुभं वा तत्परिपच्यतेऽनुभूयते कारणबहुत्वादा तस्य गौरवाद्धाधिक्यम् । एतदुक्तं भवति नैसर्गिकदशान्तर्दशाविदशाराशिफलं भावफलं दृष्टिफलमष्टकवर्गफलं होरादिवर्गफलं प्रत्यब्दमासनिशाफलादिभेदैः शुभाशुभफलविपाकः तेषु शुभाशुभफलेषु उभयोः साम्ये तयोः फलयोरभावः यस्याधिक्यं

तस्य परिपाकः । यथा पुरुषस्य जन्मकाले पुत्रस्थाने गुरुः पुत्रप्राप्तिर्न दृष्टश्चेत्कथमिति सन्देहात्तन्निर्णीयते तथा विचारः अनेकविधकारणान्तरेण 'मकरे नीचोल्पवित्तो सुखी' इत्यादिवचनेन गुरोरनिष्टफलदत्वं च यदा भवति तदा शुभाशुभयोर्विरोधः । पुनरष्टमाधिपतेरशुभत्वमूह्यम् । 'तस्याधिपतिर्भवोऽपि वा निर्याणं स्वगुणैः प्रयच्छति' इतिवचनात् । तथा चोक्तम्–

यद्भावस्योऽष्टमपस्तद्भावो नश्यते न सन्देहः ।" इति ।

भावाधिपतित्वाद्भावपुष्टिस्तस्याष्टमाधिपतित्वाद्भावहानिरित्युभयं यत्र दृश्यते तत्र च फलयोर्विरोधः । यदधिकं परिपच्यते न च इत्यस्योदाहरणम्–शनेस्तावन्मेषस्थस्य मूर्खोऽटनः कपटवानित्यशुभत्वं तस्यैव लग्नगतत्वे " प्रद्युम्नार्थो रोगी" इत्यादिनाप्यशुभफलत्वम्–

'परविभवपरिच्छदोपभोक्ता रवितनयो बहुकार्यकृद्गुणेशः' इत्यनेन शुभफलदत्वं च यत्र सम्भवति तत्राशुभफलस्याधिक्यात्तत्परिपच्यते । एवं बहुधा फलपरिपाकः श्रीपतिनाप्युपदिष्टस्तथा च तद्वाक्यम्—

"पाकं द्वादशधा वदन्ति यवना दिग्भेदभिन्नं तथा
माणित्थः खलु बादरायणमुनिस्तं चाष्टधा प्रोक्तवान् ।
षड्भेदं खलु सिद्धसेनविबुधस्तं देवराट् पुन–
र्भेदैरब्धिमितैरुदारधिषणाः श्रीविष्णुगुप्तास्त्रिभिः ।"
"पाकं द्विभेदं पुनराह सत्यस्तच्छास्त्रदृष्ट्या कथयाम्यथैतान् ॥"

अस्यार्थो नैसर्गिकेत्यादिना पूर्वमेव व्याख्यातः ।

इति दशाध्याय्यामष्टमोऽध्यायः ॥ ८ ॥

## अथाष्टकवर्गाध्यायः ९.

### ( शार्दूलविक्रीडितम् )

स्वादर्कः प्रथमायबन्धुनिधनद्व्याज्ञातपोद्यूनगो
वक्रात्स्वादिव तद्वदेव रविजाच्छुक्रात्स्मरान्त्यारिगः ।
जीवाद्धर्मसुतायशत्रुषु दशन्यायारिगः शीतगो–
रेष्वेवान्त्यतपः सुतेषु च बुधाल्लग्नात्सबन्ध्वन्त्यगः ॥ १ ॥
लग्नात्षट्त्रिदशायगः सधनधीधर्मेषु चाराच्छशी
स्वात्सास्तादिषु साष्टसप्तसु रवेः षट्त्र्यायधीस्थो यमात् ।
धीत्र्यायाष्टमकण्टकेषु शशिजाज्जीवाद्व्ययायाष्टगः

केन्द्रस्थश्च सितात्तु धर्मसुखधीत्र्यायास्पदानङ्गगः ॥ २ ॥
वक्रस्तूपचयेष्विनात्सतनयेष्वाद्याधिकेषूदया-
च्चन्द्राद्द्विग्विफलेषु केन्द्रनिधनप्राप्त्यर्थगः स्वाच्छुभः ।
धर्मायाष्टमकेन्द्रगोऽर्कतनयाज्ज्ञात् षट्त्रिधीलाभगः
शुक्रात्षड्व्ययलाभमृत्युषु गुरोः कर्मान्त्यलाभारिषु ॥ ३ ॥
द्व्याद्यायाष्टतपःसुखेषु भृगुजात्सत्र्यात्मजेष्विन्दुजः
साज्ञास्तेषु यमारयोर्व्ययरिपुप्राप्त्यष्टगो वाक्पतेः ।
धर्मायारिसुतव्ययेषु सवितुः स्वात्साद्यकर्मत्रिगः
षट्स्वायाष्टसुखास्पदेषु हिमगोः साद्येषु लग्नाच्छुभः ॥४॥
दिक्स्वाद्याष्टमदायबन्धुषु कुजात्स्वात्सत्रिकेष्वङ्गिराः
सूर्यात्सत्रिनवेषुधीस्वनवदिग्लाभारिगो भार्गवात् ।
जायायार्थनवात्मजेषु हिमगोर्मन्दात्त्रिषड्धीव्यये-
द्विग्धीषट्स्वसुखायपूर्वनवगो ज्ञात्सस्मरश्चोदयात् ॥ ५ ॥
लग्नादा सुतलाभरन्ध्रनवगः सान्त्यश्शशांकात्सितः
स्वात्साज्ञेषुसुखत्रिधीनवदशच्छिद्रात्तिगः सूर्यजात् ।
रन्ध्रायव्ययगो रवेर्नवदशप्राप्त्यष्टधीस्थो गुरो-
र्ज्ञाद्धीत्र्यायनवारिगस्त्रिनवषट्पुत्रायसान्त्यः कुजात् ॥ ६ ॥
मन्दः स्वात्त्रिसुतायशत्रुषु शुभः साज्ञान्त्यगो भूमिजा-
त्केन्द्रायाष्टधनेष्विनादुपचयेष्वाद्ये सुखे चोदयात् ।
धर्मायारिदशान्त्यमृत्युषु बुधाच्चन्द्रात्त्रिषड्लाभगः
षष्ठायान्त्यगतः सितात्सुरगुरोः प्राप्त्यन्त्यधीशत्रुषु ॥ ७ ॥

अष्टकवर्गाध्यायो व्याख्यायते-स्वादर्कस्त्यस्मिन् श्लोके प्रथमं रविकुजमन्दाः पापग्रहाः प्रोक्ताः भृगुगुरुबुधचन्द्राः शुभग्रहाश्च तेनायमर्थो गम्यते पापग्रहाणां दुःखफलदत्वात्तत्परिहाराय शुभक्रियाः कर्तव्याः अष्टकवर्गेण चिन्त्यस्यादृढकर्मफल-स्यैव हि परिहार्यत्वमिति ।

"सूर्यस्याष्टसु विन्दुषु क्षितिपतेराप्ता विभूतिर्धनम्
सप्तस्वद्भुतकान्तिसौख्यविभवः षट्सु प्रतापोन्नतिः।
पञ्चस्वर्थसमागमः सदसतोः साम्यं चतुष्के त्रिके
अध्वश्रान्तिकरो द्विके गदभयं रूपेऽथ शून्ये मृतिः॥" इति।

पित्रादिकारकभूतानामर्कादीनां लग्नतुल्यत्वादर्कस्थितराशेर्नवमं पितृस्थानत्वेन निरूपणीयम्। तत्रार्कस्याष्टकवर्गफलानि निक्षिप्य त्रिकोणैकाधिपत्यशोधनं कृत्वा सर्वं पिण्डं सप्तसप्तभिर्निहत्याविभज्य शेषो यन्नक्षत्रं दृश्यते तत्त्रिकोणगते मन्दे पितुः पितृसमस्य वा व्यसनं वाच्यम्। अर्काष्टकवर्गे यस्मिन्राशौ फलभूयस्त्वं स्वगृहे तस्मिन्राशौ देवस्थानफलं देवाराधनं च समृद्धिकरं भवति। फलभूयस्त्वराशौ स्थिते राजदर्शनव्यवहारादिकं कार्यम्॥ १॥ २॥ ३॥ ४॥ ५॥ ६॥ ७॥

(मालिनी)

इति निगदितमिष्टं नेष्टमन्याद्विशेषा-
दधिकफलविपाकं जन्मभात्तत्र दद्युः।
उपचयगृहमित्रस्वोच्चगैः पुष्टमिष्टं
त्वपचयगृहनीचारातिगैर्नेष्टसम्पत्॥ ८॥

इति श्रीवराहमिहिरविरचिते बृहज्जातकेऽष्टकवर्गा-
ऽध्यायो नवमः॥ ९॥

इति निगदितमिति। एवं चारफलमुक्तम्। अथाष्टकवर्गफलमुच्यते। इति निगदितमित्यादिविशेषादधिकफलविपाकमिति ग्रहचारेण वा दशायां चेष्टं फलम् अष्टकवर्गेण चेष्टं चेत्तद्विशेषाच्छुभमेव भवति। उक्तविपरीतभावे विशेषादशुभमेव भवति। अथवा इति निगदितमिष्टं नेष्टमन्यदित्युक्तयोरिष्टानिष्टयोर्विशेषादन्तराधद्विकं फलं तस्य विपाकं दद्युरिति।

जन्मनामित्यत्र जन्मशब्दप्रसंगतः जन्मकालीनग्रहैर्यत्तदष्टकवर्गे निक्षिप्यते इति सूचितं भवति। तत्र दद्युरिति राशौ यत्र भागे फलपाकस्तत्र चरंतो ग्रहास्तत्फलं दद्युरिति फलपाकस्यापि प्रस्तारो विज्ञायते प्रस्तारं विनापि अष्टकवर्गफलपाकभावं विज्ञातुमुपायोऽस्ति। सोऽत्रोच्यते। राश्यष्टमांशोऽत्र पंचविंशत्युत्तरशतद्वयलिप्तात्मकः तेष्वष्टमांशेषु शनैश्चरादीनां कक्ष्याक्रमसिद्धानां ग्रहाणां लग्नस्य च फलपाको विज्ञायते। यस्मिन्नष्टमांशेऽष्टकवर्गफलं यस्य ग्रहस्य विद्यते तस्मिन्भागे ग्रहः शुभः। अष्टकवर्गसिद्धिफलं शनैश्चरस्य चेत् सप्तग्रहस्तस्मिन्राशौ प्रथमाष्टमांशे शुक्रस्य चेत्षष्ठे चन्द्रस्य चेत्सप्तमे लग्नस्य चेदष्टमाष्टमांशे इति प्रस्तारफलविज्ञानोपायः।

अथवा विशेषादधिकफलमित्यत्र विशेषशब्देन शोधनमुच्यते त्रिकोणशोधनमेकाधिपत्यशोधनं च शास्त्रान्तरादवगम्य तस्मिन् कृते यदधिकं शिष्टं तस्य विपाकं दद्युरिति केन्द्रपणफरापोक्लिमेषु फलाधिक्याल्पताभ्यामादिमध्यमाद्यवस्थासु शुभाशुभं चिन्त्यम्। व्ययभावादायभावे फलाधिके सति धनवान् भवति। यत्राष्टाविंशतिफलानि तस्य भावस्य मध्यमत्वं यत्र तदूनानि तस्याधमत्वम्। यत्र तदधिकानि तस्योत्तमत्वमित्याद्यष्टकवर्गविधानेन बहु निरूपणीयम्। तदत्रोच्यते विशेषादधिकफलं पाकजन्मिनां तत्र दद्युरिति।

उपचयग्रहमित्रेत्यादिना तु ग्रहबलाबलं शुभाशुभचारमष्टकवर्गफलानि निरूप्य फलविशेषश्चिन्त्यते। 'उपचय' इत्यादिश्लोकोत्तरार्धस्यार्थोद्गिमकारो व्याख्यायते। ग्रहाणां जन्मकाले स्थितिवशाच्चारवशाच्च ते तत्र प्रथमं जन्मकाले ग्रहाणां स्थितिवशाद्योऽर्थ उच्यते सोऽत्रोच्यते। जन्मचन्द्रास्थितराशेर्लग्नाच्च यान्युपचयस्थानानि त्रिषड्दशमैकादशानि तेषु गतैर्मित्रग्रहाण्युच्यंते। स-सब्देन स्वराशिमूलत्रिकोणराशिरुच्यते। उपचयशब्देनोच्चराशयस्तेषु गतैर्ग्रहैर्यदिष्टं फलं दीयते तत्पुष्टं भवति सम्पूर्णं भवतीत्यर्थः। त्वपचयग्रहनीचारातिगैर्नेष्टसम्पत्' इत्यत्र अपचयग्रहनीचारातिगैर्ग्रहैर्दत्तस्येष्टस्य सम्पत् न। अथवा अपचयग्रहनीचारातिगैर्नेष्टमनिष्टं यत्तस्य संपत् न भवति। अथवोपचयग्रहमित्रस्वोच्चगैरित्यादिश्लोकोत्तरार्धगताभ्यामिष्टानिष्टशब्दाभ्यां पूर्वार्धगतेष्टनेष्टशब्दा उच्यन्ते। एतदुक्तं भवति। अष्टकवर्गफलाधिक्येन यदिष्टं फलं ग्रहाः कुर्वन्ति ते उपचयगृहमित्रस्वोच्चगाश्चेत्तत्पुष्टं कुर्वन्ति। अष्टकवर्गफलाल्पतया यन्नेष्टं कुर्वन्ति। अपचयगृहनीचारातिगताश्चेत्तस्य नेष्टस्य सम्पद्भवति प्राचुर्यं भवतीत्यर्थः। अस्मिन्पक्षे पूर्वोक्तोऽर्थः समीचीनः शास्त्रान्तरसंवादाच्च। तथा च शास्त्रान्तरम्-

"लग्नादुपचयसंस्थश्चन्द्राद्वा स्वगृहमूलतुङ्गस्थः।
मित्रक्षेत्रगतो वा फलमतिशयितं ग्रहो दद्यात्॥
अपचयराशौ नीचे शत्रुक्षेत्रेऽपचयजफाले स्यात्।
यस्तु च यथत्पाकं फलमतिशयितं ग्रहो यथाकालम्॥" इति।

अथ चारवशान्निरूपणीयोऽर्थो व्याख्यायते-

उपचयगृहमित्रस्वोच्चगैरित्यत्रोपचयशब्देन ग्रहचारे जन्मराशेरारभ्य यस्मिन्राशौ ग्रहे स्थिते उपचयो वृद्धिर्भवति स राशिः उच्यते तत्र स्थितो ग्रहः स्वमित्रक्षेत्रस्वक्षेत्रोच्चगश्चेत्स्वदीयमानमिष्टं फलं करोति अन्यथानिष्टं फलं पुष्टं करोति अथवात्रापि पूर्ववदष्टकवर्गफलैरिष्टनेष्टे निरूप्येते। एतदुक्तं भवति। अष्टकवर्गेण चारवशाच्च मित्रशत्रोश्चस्थित्या चेष्टं फलं ग्रहाणां पुष्टं भवतीति। अष्टकवर्गचाराभ्यां दशायाः प्राधान्यं

भवति दृढकर्म फलदात्वाद्दशानिरूपणेऽपि दशादातृग्रहबलाबलं निरूपणीयम्। बलाबलनिरूपणेऽपि स्थानबलप्राधान्येन निरूपणीयम्। तदनेनैवाचार्येण स्वल्पजातके उक्तम्–मित्रोच्चस्वगृहांशोपगतानां शोभना दशाः सर्वाः। स्वोच्चाभिलाषिणामपि नतु कथितविपर्ययस्थानामिति अष्टकवर्गफलबाहुल्येऽपि फलदातृग्रहाणां दौर्बल्येऽष्टकवर्गफलानां निर्जीवितत्वमवगन्तव्यम्। अन्यथा सजीवितत्वं तस्माद्बलाबलवशादेव शुभाशुभं कल्पनीयम्। तथा च जातकसंग्रहे–

"दिक्स्थानकालचेष्टाबलयुक्तो नास्तगो न रिपुयुक्तः।
न पराजितश्च युद्धे शुभगाश्रयस्तस्य शोभना हि दशा॥"
"उक्तविपरीतसंस्था न शुभाः स्युश्चेति कीर्तितं पूर्वैः।
नीचेऽस्तगेऽरिराशौ रन्ध्रे व्ययभेऽथवा बलैर्हीनः॥
तेषां दशासु मतिमान् सम्पत्तिं निर्दिशेद्यथायोग्यम्॥" इति।

इति दशाध्याय्यां नवमोऽध्यायः॥ ९॥

## अथ कर्माजीवाध्यायः १०.

(प्रहर्षिणी)

अर्थाप्तिः पितृपितृपत्निशत्रुमित्र-
भ्रातृस्त्रीभृतकजनाद्दिवाकराद्यैः।
होरेन्द्वोर्दशमगतैर्विकल्पनीया
भेन्द्वर्कास्पदपतिगांशनाथवृत्त्या॥ १॥

अथ कर्माजीवाध्यायो व्याख्यायते।

अर्थाप्तिरिति। दिवाकरे दशमगते पितृपक्षात्, चन्द्रे मातृपक्षात् कुजे सपत्नपक्षात् बुधे मित्रपक्षाद्गुरौ भ्रातृपक्षाच्छुक्रे भार्यापक्षाच्छनौ भृत्यपक्षादर्थाप्तिरित्यन्वयः। स्त्रीशब्देन भार्या विवक्षिता भार्यावशाद्गुणदोषा भवन्ति। 'अर्धं भार्याशरीरस्य' इत्याद्युक्तत्वाद्भार्याजन्मवशात्पुरुषस्य गुणदोषाश्रित्याः तदर्थं स्त्रीजातकाध्यायोक्तः 'यद्यत्फलं नरभवे क्षममङ्गनानां' क्षमयोग्यं स्त्रीणां वाच्यम्। तथा च स्वल्पजातके–'पुंजन्मफलं यद्यद्घटते स्त्रीषु पतिषु तत्तासाम्। वक्तव्यं राज्याद्यं नृपणविनाशादि वा पापम्॥१॥' इति अक्षमं पतिषु वदेदित्युक्तस्यायमर्थः। तासां तु तत्र विशेषयाविनिश्चने पतिमरणं, लग्नचन्द्राभ्यां शरीरं, सप्तमे च सौभाग्यं, पतिरपि चिन्त्य इति तथा चोक्तम्–

"वैधव्यं निधनगृहे पतिसौभाग्यं सुखं च यामित्रे।
सौन्दर्यं नवमगृहे विचिन्तयत्पुत्रसम्पदं नवमे॥

एषु स्थानेषु गताः सौम्याः शुभदा बलान्विता लग्ने ।
प्रोक्ताः क्रूरास्तु नेष्टफलदा भवने शनिवर्जिताः सदा चिन्त्याः॥" इति।

युग्मेषु लग्नशशिनोरित्यत्र युग्मराश्यंशयोरिति ग्राह्यम् । ओजस्थयोरित्यत्रापि तद्वद्भवति ग्रहेऽस्तमये स्थितेंशके चेत्युत्तरत्र वक्ष्यति । तथा चोक्तम्-

"पुरुपर्क्षे पुरुषांशे लग्नेन्द्वोः पापयुक्तयोर्जातः ।
पुरुषः पुरुषाकृतिशीलयुता भर्तुरयोग्यासमंजसा कन्या ॥
समराशौ समभागे लग्नेन्द्वोः स्त्रीगुणान्विता कन्या ।
सौम्ययुतालोकितयोः सुभगा साध्वी सुविख्याता ॥" इति ।

ओजस्थयोस्तु । तुशब्देनाशुभत्वं सूचितम् । कन्येव दुष्टेति । कन्याशब्देन प्रजात्वमप्युक्तम् । इष्टा गुणहीना व्रजतीह दास्यं बहुजनविधेया दुःशीला प्रेष्या च । साध्वी पतिव्रता पुत्रवतीत्युदारा च समाया मायासहिता मलिनाचारात्पसुता च कुचरित्रयुता राजप्रिया भूम्यात्मजर्क्षे मेषवृश्चिकयोरित्यर्थः । वक्रार्किजीवेन्दुजभार्गवाणां त्रिंशांशकेषु क्रमादेतानि फलानि उक्तानि अत्र वक्रादिक्रमोक्त्या वृश्चिकराशौ व्युत्क्रमेणैतानि फलानि वक्तव्यानीति सिद्धं भवति । तानि फलानि शास्त्रान्तरे-

"भौमर्क्षे भौमांशे कन्यामृतसूचिता गुणैर्हीना ।
कन्याजननी कन्या शुक्रांशे जारभोगसन्तुष्टा ॥" इति ।

दुष्टा पुनर्भूरिति । दुष्टारिग्रहपरा भूपतिदैव्या च । पुनर्भूर्द्विरूढा मृतप्रजप्ररोहयुक्ता सुगुणा रूपेण भर्तृपुत्रैश्च । सुगुणा कलाज्ञा काव्यकलादिततपरा तस्मात्कुचरित्रा च ख्याता गुणैर्भोगवती जगत्प्रिया प्रसिद्धा च स्यात् । कापटीत्यादि फलं बौधे बुधराशौ कापटी, स्वच्छन्दा, नष्टप्रजा क्लीबसमा पतिहीना दरिद्रा च । सती पतिव्रता, च शब्देनाल्परतिर्गुणाढ्या, शिल्पादिकुशला प्रविकीर्णकामा निष्फलकामा वन्ध्येत्यर्थः । मृतप्रजा स्त्रीषु दुष्टतरेपि । तथा चोक्तमन्यत्र-

"सितभवने भौमांशे दुष्टा कलहप्रिया पतिद्वेष्या ।
मन्दांशे तु पुनर्भूर्मृतप्रजा रोगयुता नित्यम् ॥
रूपान्विता गुणाढ्या जीवांशे भर्तृपुत्रसम्पन्ना ।
कुचरित्रा सौम्यांशे काव्यकलागेयवाद्यसन्तुष्टा ॥
शुक्रांशे भोगवती विदग्धदयिता जगत्प्रिया ख्याता ।
बुधभवने भौमांशे स्वच्छन्दकामिनी विनष्टसुता ॥
मन्दांशे पतिहीना कृच्छ्रान्नेनोपजीवती नित्यम् ।
अल्पसुता क्षीणायुर्जीवांशे शिल्पिनी बुधांशे ॥
वन्ध्या मृतप्रजा या शुक्रांशे स्त्रीषु दुष्टतरा ।" इति ।

स्वच्छन्दा स्वैरचारिणी पतिघातिनी पतिघ्नी बहुगुणा पुत्रादिगुणवती शिल्पनिपुणा असाध्वी दुष्टमाररता, असती चासन्तनिश्चार्कभे वाचाला बहुभाषिणी विदेशरता परपुरुषगामिनी कुलटा कृशा दरिद्रा कुलहीना च नृपवधूः। पुंश्चेष्टिता कार्यरता पुरुषाकृतिशीलयुता अगम्यगागम्यपुरुषगामिनी अत्यसुतरागवती। जैवेनैकगुणेत्यादि नैकगुणा पत्यनुसारिणी पुत्रवती शीलवती चाल्परतिरल्पसुखा च कापटिका कन्याजननी स्वतन्त्रनिरता चातिगुणा भर्तृसम्पदादिगुणसम्पन्ना विज्ञानयुक्ता धर्मपरा शिल्पकुशला शास्त्रार्थज्ञाता सती पतिव्रता च दासी बहुजनविधेया पुत्रहीना च नीचरता नीचे कर्मणि रता अथवा नीचरता गार्भिणीयजनरता दुर्भगेत्यर्थः पतिरता पत्युरिष्टा सुभगा दुष्टा तु भग्नव्रतधर्मा कुलटा कुलघ्नी च अप्रजा तु वन्ध्या चारित्रलोचना च-शब्देन पूर्वोक्ता दुष्टा चेत्यर्थः। अंशकैस्त्रिंशांशकैरिति शशिलग्नेति शशिलग्नयोर्बलयुक्तेन युक्तैस्त्रिंशांशकैरिदं विचिन्तयेत्। अथवा कयोर्योग त्रिंशांशकैर्वा बलाबलविकल्पेन तयोः शशिलग्नयोरुक्तं फलं विचिन्तयेत्। बलाबलविकल्पेन त्रिंशांशकाधिपतेर्बलवशादुक्तफलमाधुर्याल्पत्वमूह्यमित्यर्थः। दृक्संस्थावित्यादियोगद्वयं दृक्संस्थौ परस्परदृष्टौ यदि स्त्रीभिर्नराकृतिस्थिताभिः स्त्रीप्रदीप्तं मदनविषानलं संशान्तिं नयतीति इत्येको योगः। शौक्रे राशौ यदि कुम्भांशक उदेति तदा द्वितीयः। अथवा परस्परांशगतौ सितासितौ परस्परदृष्टौ शौक्रराशावुदयति कुम्भांशकश्च भवति। यदि स्त्रीभिः स्त्रीमदनविषानलं संशान्तिं नयतीत्येको योगः। इति केचित् तथा च सारावल्याम्–

"शौक्रयासितौ यदि परस्परभागलेशे
शौक्रे च दृष्टिपथगावुदये घटांशे।
स्त्रीणामतीव मदनाग्निगदः प्रवृद्धः
स्त्रीभिः शमं च पुरुषाकृतिभिर्लभन्ते॥" इति।

शून्ये कापुरुष इत्यादिश्लोके परगृहे नित्यं प्रवासान्वित इत्यत्र स्थितग्रहे स्वगृहवासीति चोह्यं भवति। क्लीबोक्ते बुधमन्दयोरित्यत्र तयोर्युगपत्स्थितिरपेक्षितेति स आग्नेयैरित्यादिश्लोके क्रूराणां सप्तमे प्रत्येकं फलमुक्त्वा इदानीं क्रूरस्य फलोक्तिः सविशेषा विहिता हीनबलवत्त्वं विशेषः सौम्येक्षितत्वं च। तथा चोक्तम्–

"बलहीनेऽस्तगे पापे सौम्यग्रहनिरीक्षिते।
भर्त्रा विसृज्यते नारी० इति॥"

इति पूर्वार्धं स्पष्टम्। कौजेस्तांश इति लग्ने यतिमोंश उदेति सप्तमे ततिमोंशः अत्रांशशब्देनोच्यते 'भवति ग्रहेऽस्तमये स्थितेंऽशके वा' इति वक्ष्यमाणविधिनैव सिद्ध्यति। तयोर्बलवशात्फलनिर्देशः सौरिणेत्यत्र। सौरिणा दृष्टेऽस्तां

इत्यन्वयः। श्लोकपूर्वार्धे पापदृष्टे इत्यत्र पापैर्दृष्टे इति समासविवरणे कृते पृथक् स्थितो दृष्टशब्दः। सौरिणेत्यत्राध्याहार्यः, तथा च सारावल्याम्-

"द्यूने कुब्जनवांशे शनिदृष्टे चापि रोगयोनिः स्त्री" इति 'वृद्धो मूर्खः' इत्यादि-श्लोकद्वयं स्पष्टार्थम्। 'ईर्ष्यान्वित' इत्यादिश्लोकद्वयं स्पष्टार्थम्। क्रूरेत्यादिश्लोके तु निधनेश्वरश्चापि चिन्त्य इत्युक्तं भवति। क्रूरेऽष्टमे विधवता धवो भर्ता विगतधवता भर्तृमरणमित्यर्थः। अर्थात्सौम्येऽष्टमगते सति भर्तृमरणात्पूर्वं स्वमरणं भवति। तथा च सारावल्यामुक्तम्-

"पापेऽष्टमे विधवता निधनाधिपतिर्नवांशके यस्य
तस्य दशायां मरणं तस्याः स्वयं शुभे तत्स्थे॥" इति।

तदा मरणमित्यत आह-"निधनेश्वरांशे यस्य स्थितो वयसि तस्य समे प्रदिष्टा" इति निधनेश्वरो यस्य नवांशे स्थितस्तस्य समे वयसि विधवता प्रदिष्टा समे वयसीत्यनेन तस्य निसर्गदशाकाले इति कैश्चिद्व्याख्यायते। परे तु तस्य दशाकाले-ऽन्तर्दशाकाले वेत्युच्यते। तथा च सारावल्याम्। उक्तस्यार्थोऽत्राचार्येण भावाध्याये-

"समुपचयविपत्तिः सौम्यपापेषु सत्यः
कथयति विपरीतं रिःफषष्ठाष्टमेषु॥"

इत्यनेनाष्टमभवनस्य बलाबलं तथा तस्य बलाबलं च निरूपणीयम् भवति। एतद्भावाध्यायेप्युपदिष्टम्-

"सुहृदरिपरकीयस्वर्क्षतुङ्गस्थितानां
फलमनुपरिचिन्त्यं लग्नदेहादिभावैः।" इति।
"उच्चत्रिकोणस्वसुहृच्छत्रुनीचगृहार्कगैः।
शुभसम्पूर्णपादोनदलपादाल्पनिष्फलम्॥"

इत्यनेनाष्टमगतस्य क्रूरस्य 'लग्नात्पुत्रकलत्रभे शुभपतिप्राप्तेऽथवालोकिते चन्द्राद्वा यदि सम्पदस्ति हि तयोर्ज्ञेयोऽन्यथासम्भवः'। इत्यनेन पुत्रकलत्रसम्पन्निरूपण-विधानेन सर्वभावसम्पदसम्पन्निरूपणप्रकार उक्तः। तथा चार्यपुत्रेणोक्तम्-

"यो यो भावः स्वामियुक्तेक्षितो वा
सौम्यैर्वा स्यात्तस्य तस्याभिवृद्धिः।
पापैरेवं तस्य भावस्य हानि-
र्निर्देष्टव्या पृच्छतां जन्मतो वा॥"

तस्मादष्टमस्थः क्रूरोऽष्टमाधिपतित्वे वैधव्यकृन्नेति सिद्धं भवति। क्रूरेऽष्टमे विधवतायुक्तो विधवता नियता इत्यत आह-

'सत्स्वर्थगेषु मरणं स्वयमेव तस्य' इति सत्सु शुभग्रहेषु धनगतेषु क्रूरेऽष्टमे सति तस्याः स्वयमेव मरणमष्टमगतस्य शुभदृष्टत्वात्स मरणादपि गरीयो भर्तृमरणं भवति। अथवा नष्टजातकाध्याये—

"एवं कलत्रसहजात्मजशत्रुभेभ्यः
प्रष्टुर्वदेदुदयराशिवशेन तेषाम्—"

इत्यनेन यद्भावो निरूपणीयस्तद्भावं विलग्नं कृत्वा तद्भावस्य धनादिभावाः सर्वेऽपि चिन्त्या इत्युक्तं भवति। विहितस्य सप्तमभावस्य भर्तृस्थानभूतस्याष्टमे लग्नाद्धनस्थाने स्थितेषु शुभग्रहेषु भर्तुरायुरस्तीति चिन्त्यम्। भर्तुरायुषि सति क्रूरेऽष्टमे सति तस्य फलं स्वमरणमिति। 'सत्स्वर्थगेषु मरणं स्वयमेव तस्या' इत्यनेनोक्तं भवति तस्माद्भर्तृजन्मग्रहराशिवशात्तस्यायुषि दीर्घे सति स्त्रीजन्मनि क्रूरेऽष्टमे तस्याः स्वयमेव मरणं वक्तव्यमित्यादि विचारणीयमिति कन्यालिगोहरिषु चाल्पसुतत्वमित्यनेनाल्पसुतराशयो विहिताः। कन्यालिगोहरयोऽल्पसुतराशयस्तेषां पुत्रस्थानगतत्वमपि कष्टमिति चकारात्सूचितम्। तदपि सारावल्यामुक्तम्—

"कन्यालिवृषसिंहाः पञ्चमगा यस्य सूतिकाले।
स्युस्तस्याल्पसुतत्वं स्यादिति स्त्रीणां पुत्रचिन्ता तु"
"यद्यत्फलं नरभवे क्षममंगनानां तत्तद्वदेत्०"

इत्यत आह "निधनेश्वरांशे यस्य स्थितो वयसि तस्य समे प्रदिष्टा इति निधनेश्वरो यस्य नवांशे स्थितस्तस्य समये वयसि विधवता प्रदिष्टा समे वयसीत्यनेन तस्य निसर्गदशाकाले इति कैश्चिद्व्याख्यायते। परे तु तस्य दशाकालेऽन्तर्दशाकाले वेत्युच्यते। तथा च सारावल्याम्—उक्तस्यार्थोऽत्राचार्येण भावाध्याये—

"समुपचयविपत्तिः सौम्यपापेषु सत्यः
कथयति विपरीतं रिःफषष्ठाष्टमेषु॥"

इत्यनेनाष्टमस्थस्य पापस्य मरणप्रदत्वे निरूप्यमाणे।

'फलमधिकमिदं यदत्र भावाद्भवनभनायगुणैर्विचिन्तनीयम्' इत्यनेनाष्टमभवनस्य बलाबलं तथा तस्य बलाबलं च निरूपणीयं भवति। एतद्भावाध्यायेऽप्युपदिष्टम्—

"सुहृदरिपरकीयस्वर्क्षतुंगस्थितानां
फलमनुपरिचिन्त्यं लग्नदेहादिभावैः।"
"उच्चत्रिकोणस्वसुहृच्छत्रुनीचगृहार्कगैः।
शुभसंपूर्णपादोनदलपादाल्पनिष्फलम्॥"

इत्यनेनाष्टमगतस्य क्रूरस्य "लग्नात्पुत्रकलत्रभे शुभपतिप्राप्तेऽथवालोकिते चन्द्राद्वा यदि सम्पदस्ति हि तयोर्ज्ञेयोऽन्यथासम्भवः।" इत्यनेन पुत्रकलत्रलग्नात्निरूपण-

विधानेन 'सर्वभावस' इत्यनेन पूर्वोक्तप्रकारो निरूपयितव्य इति सिद्धं भवति। 'सौरे मध्यबले बलेन सहितः' इति श्लोकः स्पष्टार्थः। 'पापेस्ते' इत्यादिश्लोके उद्वाहे वरणविधावित्युत्तरार्धे वरणविधावित्यत्र वरणं कन्यावरणं प्रदाने चिन्ताप्रश्नः। एतेषु तत्स्त्रीजातकोक्तं सर्वमपि विधेयमित्यर्थः। अलमतिप्रसंगेन।

प्रकृतमनुसरामः। 'भेन्द्वर्कास्पदपतिगांशनाथवृत्त्या' इति 'उदयरविशशांकप्राणि-केन्द्रादिसंस्थाः' इति पूर्वमुक्तम्। इदानीं भेन्द्वर्कास्पदपतिगांशनाथवृत्त्येत्यत्रापि रविवशात्फलं चिन्त्यमित्युक्तं भेन्द्वर्कास्पदपतिराशिवृत्त्या तत्र ग्रहगतवृत्त्या तदधि-पस्वभावादि निरूपयितव्यम्–तथा च सारावल्याम्–

"होरेन्द्वोर्बलयुक्ताद्यो दशमस्तत्स्वभावकं कर्म।
तत्स्थाधिपपरिवृद्ध्या वृद्धिर्ज्ञेयान्यथा हानिः॥
जाङ्गलमथवानूपं ततो भयं वा ग्रहं निरीक्षेत।
ग्राम्यमथारण्यं वा सौम्यर्क्षे पापभवनं वा॥
द्विपदचतुष्पदरूपं सरीसृपं वा ततो भयम्।
चेत्समयपं तद्भवनं यादृशस्तत्स्वयं वा॥
प्रवदेत्समप्रदेशे कर्मप्राप्तिस्ततत्सदृशी।
तस्माद्दशमं भवनं प्रसवे बुद्ध्येत यत्नेन॥"

इत्यत्रापि बलवशात्फलनिर्देशः अधिपतिः स्वोच्चगतश्चेदुत्कृष्टवृत्त्या नीचगतश्चे-न्नीचवृत्त्या द्रव्याण्यपि तथाविधानि उच्चगतश्चेदयत्नेन सिद्ध्यति नीचराशिगतश्चे-द्यत्नेन दशमराशौ बलवति तद्देशवृत्तिः, अधिपयुतराशौ बलवति तद्देशे वृत्तिः, दशमाधिपयुक्तांशनाथे बलवति अंशकसमदेशः लग्नचन्द्रयोर्दशमगतैर्दिवाकराद्यैः राजादितोर्थप्राप्तिश्चिन्त्या। 'विप्रादित इति वर्णाश्चिन्त्याः। 'प्रथितश्चतुरोऽटन' इत्यादिराशिशीलफलं योज्यम्। तत्र राश्यंशयोर्बलवतोर्दशमाधिपस्य फलं चिन्त्यं दिवाकराद्येषु दशमर्क्षस्थितेषु तदुक्तफलाद्धनसिद्धिः। तदभावे 'भेन्द्वर्कास्पदपतिगां-शनाथवृत्त्या इति केचित्। तथा चोक्तम्–

"दशमे वा ग्रहरहिते चन्द्राद्भानोस्तयाद्वयोर्बलिनः।
तदधीश्वरांशनाथस्वभाववृत्त्या च जीवनं कुरुते॥ १॥

( प्रहर्षिणी )

अर्कांशे तृणकनकोर्णभेषजाद्यै-
श्चन्द्रांशे कृषिजलजाङ्गनाश्रयाच्च।

धात्वग्निप्रहरणसाहसैः कुजांशे
सौम्यांशे लिपिगणितादिकाव्यशिल्पैः ॥ २ ॥

अर्कांशे तृणकनकोर्णभेषजाद्यैरित्यत्रादिशब्देन फलवृक्षधातुविक्रयशिल्पद्यूतराजसेवादयोऽपि गृह्यन्ते। तथा चोक्तम्–

"अर्कांशे फलवृक्षैर्भेषजैर्धातुविक्रयैः शिल्पैः।
द्यूतशाठ्यकरैर्भूपैर्वा वित्तमाप्नुयात्सततम् ॥" इति।

"चन्द्रांशे कृषिजलजांगनाश्रयाच्च" इति च-शब्देन मणिगोमहिषशर्करादयोऽपि गृह्यन्ते।। तथा चोक्तं शास्त्रान्तरे–

"चन्द्रांशे मणिपोतैः कृषिजलवस्त्रादिभिर्धनं लभते।
गोमहिषशर्कराद्यैः स्त्रीसंगमान्मातृदेवताद्वापि ॥" इति।

'धात्वग्निप्रहरणसाहसैः कुजांश' इत्यत्र कुजस्य क्षेत्राधिपत्वात्क्षेत्रादिना धनप्राप्तिरिति। अत्र बुधस्य लिपिगणितादिकाव्यशिल्पैरित्यत्र शिल्पशब्देन चित्रद्यूतनृत्यकर्मादि च गृह्यते। तथा चोक्तम्–

"लिपिलेखकाव्यगणितैर्नृत्यैस्तथा तदादिभिर्वृत्तिम्।
तदधीशे सौम्यांशे ह्यनादिभिर्दिशेन्मतिमान् ॥ २ ॥" इति।

(प्रहर्षिणी)

जीवांशे द्विजविबुधकरादिधर्मैः
काव्यांशे मणिरजतादिगोमहिष्यैः।
सौरांशे श्रमवधभारनीचशिल्पैः
कर्मेशाध्युषितनवांशकर्मसिद्धिः ॥ ३ ॥

जीवांशे द्विजविबुधाकरादिधर्मैः इत्यत्र धर्मशब्देन मन्त्रजपव्रतादि च गृह्यते। अत्रापि शास्त्रांतरमस्ति। तथा च शास्त्रान्तरे–

"अध्ययनदेवतार्चनमन्त्रजपादिवृत्तिभिर्धनवान्।
कालज्ञानमितिस्तैस्तथा गुरोरंशाशका ज्ञेयाः ॥" इति।

शुक्रांशे मणिकनकादिगोमहिष्यैरित्यत्रादिशब्देनोपचालंकारनृत्यादि च गृह्यते। तथा च शास्त्रान्तरे–

"गोमहिषाश्वाजाद्यैः स्त्रीसंगैरोषधैरलंकारैः।
नृत्यादिविविधकुशलैः शुक्रांशे वित्तवान् सुखी भवति ॥" इति।

सौरांशे श्रमवधभारनीचशिल्पैरित्यत्र–श्रमशब्देन अध्वश्रमनभेष्यवृत्तिखगमनावृत्त्यादयो गृह्यन्ते। नीचशब्देन नीचवृत्त्यादयो गृह्यन्ते। तथा च शास्त्रान्तरे–

"सौरांशे फलमूलैश्चित्रैर्भारोद्वहैः श्रमैर्धनवान् ।
नीचप्रेष्यजनाद्यैर्धान्यकुधान्यादिविक्रयैर्वापि ॥
अंशाधिपोतिबलवान् यत्नादर्थागमं सुखं कुरुते ।
अंशाधिपोतिनीचःप्रोक्तं फलमल्पमेव विदधाति
राश्युक्तदिग्विभागं देशं सञ्चिन्तयेत्स दैवज्ञः ।
लग्नात्तु दशमराशेः स्वभावदेशं विनिर्दिशेद्यथवा ॥
स्वस्वामिदृष्टयुक्तं स्वदेशफलदायकं मुनिभिरुक्तम् ।
अन्येन सहितं दृष्टं परदेशफलप्रदं वाच्यम् ॥
तदधीशे चरभांशे प्रवासतोऽर्थागमं सुखं लभते ।
स्थिरभांशे स्वकदेशादुभयांशे सर्वतो धनप्राप्तिः ॥
वक्रगते तदधीशे बहुप्रकारैर्धनं समाप्नोति ।
भाग्यानुरूपतोर्थान्विनिर्दिशेत्सर्वतोपि पूर्वोक्तम् ॥
चन्द्राद्दशमे सौम्ये बलवानेको न शत्रुयुतदृष्टः ।
जनयेद्युगान्तकीर्तिम्० ॥" इति-

जन्मकालादन्यत्रापि कर्मेशो यस्मिन्नवांशके वसति तस्य नवांशकस्य यत्कर्म विहितम्, अर्कांशे तृणकनकोर्णभेषजाद्यैरित्यादि तत्तदानीं सिद्ध्यतीत्यर्थः । अन्यथेदं पुनर्वचनं स्यात् । एतन्नवांशकोक्तं द्वादशांशेपि चिन्त्यम् । अन्यच्च कर्मेशाध्युषितनवांशाधिपतिः सूर्यश्चेन्नखदन्तचर्म्मकनककौर्याध्वभूपाहवैः स्वं संचिन्त्यम् । चन्द्रश्चेदिक्षुक्षीरविकारवस्त्रकुसुमक्रीडातिलान्नश्रमैः । कुजश्चेद्दरिविमर्दभूपसहजक्षित्याविकाजैर्धनप्राप्तिः । बुधश्चेद्दौत्यसुहृद्गुरुद्विजधनं विद्वत्प्रशंसायशोयुक्तिद्रव्यसुवर्णवेसरादिभिश्च धनप्राप्तिः । गुरुश्चेन्माहात्म्योद्यमनमन्त्रनीतिनृपतिस्वाध्याययज्ञादिभिः । शुक्रश्चेद्गीतप्रमोदात् सुरभिद्रव्यान्नपानाम्बरस्त्रीरत्नद्युतिमन्मथोपकरणादिभिर्धनप्राप्तिः । शनिश्चेत्खरोष्ट्रपक्षिमहिषीकुधान्यादिभिर्धनप्राप्तिरित्यादि चिन्त्यम् । कर्मेशाध्युषितसमानकर्मसिद्धिरितिपाठे कर्मेशाध्युषितराशिनवांशसमाने देशे कर्मसिद्धिः देशोत्र जाङ्गलानूपमरुसंज्ञितो ग्राम्यारण्यपौरसंज्ञितश्च राशिवद्विज्ञेय इति । भेन्द्वर्कास्पदराशीनां ग्रहाभावे कर्मविशेषसिद्धिर्निरूपणीयेति पूर्वमुक्तम् । कर्मविशेषास्तु शास्त्रान्तरादवगन्तव्याः । उग्रग्रहैरित्यत्र गार्गिवचनम् ।

"चतुर्थाष्टमगैः शुक्रात्सौरारार्कैर्हुताशनात् ।
तेषां द्वितयमध्यस्थे तथा शुक्रे प्रपातनात् ॥
शुक्रे सद्योगदृग्हीने पापाद्भार्यावधो भवेत् ॥" इति ।

शोषी परस्परग्रहांशयोरित्यत्र गार्गिवचनं परस्परगृहे यातौ यदि तदा तौ वा पितावंशको भवतोऽर्कशीतांशुस्तदा शोषी प्रजायते । तथा च सारावल्याम्-

"आरामपुत्रसेवाकृषिरय वाणिज्यसूतकार्येण ।
जीवन्ति जनाः नित्यं मेषगणे दशमराशिस्थे ॥
वृषभगणे दशमस्थे शकटचतुष्पदविहंगगृहधान्यैः ।
संग्रहकर्मणि निरता जांगलदेशे वसन्ति वै बहुशः ॥
जलवणिजः सुसमृद्धा मुक्तादिभिरर्थसंयुक्ताः ।
नृमिथुनवर्गे दशमे शस्त्रानलयोनिप्रस्तराजीवाः ॥
आहितुण्डिकया वृत्त्या कर्किणि वर्गे तदा दशमे ।
सव्यूहका मणीनां पाषाणकरूप्यकीटाश्च ।
कर्षणनिरता लेये जीवविधानाश्च वाणिजिकाः ॥
शाकटिकास्तक्षणका हैरण्यकगन्धविक्रये निपुणाः ।
गन्धर्वशिल्पलेख्यैः कन्यावर्गे सदाविभवाः ॥
प्रायोज्याद्युपदेशाद्धिरण्यपरिवर्तनादियोगाच्च ।
जायन्ते मनुजानां व्यवहारे लाभभाजनानीह ॥
सततं वरधान्यानां मूलानां ये विशेषतो वणिजः ।
फलमूललब्धवित्ताः कृषीवलाश्चैव जायन्ते ॥
धनुषो वर्गे दशमस्थानस्थिते जनाः कलावृत्त्या ।
स्त्रीसम्पर्कं लब्ध्वा जनितैश्वर्याः प्रजायन्ते ॥
नित्योद्युक्ताश्चौराः पृथवीपतिसेवकाः सदा लुब्धाः ।
पापा देहचिकित्सानिरता लोहकदारुजीविनः क्रूराः ॥
अन्त्यकवर्गे खस्थे धान्यानां चोपजीविनोत्पन्नम् ।
नृपसचिवदुर्गदशमे कुरुङ्गवर्गे च वारिपण्यधनः ॥
भूमौविभवं खट्वारामारोपणरसायनैर्जीवेत् ।
जातः शस्त्रानलकर्मभेदचौर्यादिभिर्जीवेत् ॥
वनवृत्त्या घटवर्गे भारवहस्कन्धजीविनः सुभगाः ।
सुभगं पत्रात्सलिलागमात्मपोषणादेश्च ।
विक्रयतो वै वर्गे मीनप्रभवे च दशमस्थे ॥"

एवं राश्यंशकाभ्यामाजीववृत्तिर्हि निरूपणीया बहुषु लक्षणेषु बलवद्भ्रहवशान्निर्णयः कर्तव्यः । जातिदेशकालावस्थानुरूपं फलं वाच्यम् ॥ ३ ॥

( प्रहर्षिणी )

मित्रारिस्वगृहगतैर्ग्रहैस्ततोर्थान्
तुङ्गस्थे बलिनि च भास्करे स्ववीर्यात् ।
आयस्थैरुदयधनाश्रितैश्च सौम्यैः
सञ्चिन्त्यं बलसहितैरनेकधा स्वम् ॥ ४ ॥

इति श्रीमदवन्तिकाचार्यद्विजराजवराहमिहिरकृते बृहज्जातके कर्म्माजीवाध्यायो दशमः ॥ १० ॥

मित्रेति । बहुप्रकारं धनं संचिन्त्यम् । 'तुङ्गस्थे बलिनि च भास्करे स्ववीर्यात्' इत्यत्रार्कस्य पितात्मकत्वात् पितृपक्षादर्था भवन्ति । आत्मस्वरूपत्वात्स्वप्रभवाच्चार्था भवन्ति । आयस्थैरित्यत्र कर्मस्थानाद्वृद्धिर्धनस्थानेन धनं, लाभस्थानेनागमोपायः । उदयेनात्मस्वभाव इति सूचितम् । तथा चोक्तम्-

"दशमेशस्य वृत्त्यैव धनेशस्योचितं धनम् ।
लाभाधीशादवाप्नोति विलग्नेशात्मके नरः ॥"

इत्येवं वराहमिहिरहोराशास्त्रे प्रथमाध्यायादारभ्याध्यायदशके विदितोर्थः मायशोत्र व्याख्यातः उपरितनाध्यायार्थाश्च केचिद्व्याख्याताः । अत्र पुनर्व्याख्यानकौशलाद्यभावात्पूर्वापरपर्यालोचननैपुण्यभावादज्ञानाच्च मूलग्रन्थानुसारतः पुनर्वचनम् । अपशब्दप्रयोगन्यायविरोधश्च अत्र सम्भवः तस्मादेतां व्याख्यां कश्चिद्बुधः पश्यति चेत्क्षन्तुमर्हति । नैषा पाण्डित्यप्रकटनया कृता वागर्था मन्दबुद्धये स्वशिष्यायोपदेष्टुमेवेति ॥ ४ ॥

अथ जातकलेखनक्रमो लिख्यते-

( अनुष्टुप् )

"अभिवाद्य गुरूनादौ गणेशं स्वेष्टदेवताम् ।
सूर्यादिकान्ग्रहान्सर्वानारभेज्जातकं बुधः ॥
अहर्गणं लिखेदादौ राशिमाख्यां तथैव च ।
पश्चात्सूर्यादिखेटानां स्फुटवाक्यानि विन्यसेत् ॥
अनन्तरं फलैर्वाक्यं व्याख्यानवदुदाहरेत् ।
ततो मन्दं ततो जीवं मासं तच्चन्द्रमेव च ॥
ऋक्षं सनाडिकं वारं दिनराश्योर्विकल्पनम् ।
प्राह्णपूर्वाह्नमध्याह्नानपराह्णं तथैव च ॥

सायाह्नं पूर्वरात्रादीनेवमेव लिखेद्बुधः ।
ततो राशिं सघटिकं पक्षभेदं तिथिं तथा ॥
करणं नित्ययोगं च चन्द्रपश्चाङ्गमेव च ।
दिवसं सगणं योनिं मृगवृक्षविहङ्गमान् ॥
पृथिव्यादि ततो भूतं तारादीनां च देवताः ।
ग्रहन्यासं लिखेत्पश्चात्षड्वर्गं तत्फलं तथा ॥
पंचांगानां फलं पश्चात्ततो भावस्फुटानपि ।
पश्चाद्ग्रहस्थितेर्व्याख्या ततो भावफलान्यपि ॥
पश्चाल्लग्नांशकाख्यां च तत्फलान्सकलानपि ।
फलयोगांश्च सकलानंशकाख्यां तथैव च ॥
अष्टवर्गं लिखेत्पश्चात्तद्व्याख्यां विलिखेत्पुनः ।
एवं विलिख्य बहुधा दशाः सूक्ष्मं विचारयेत् ॥
उच्चनीचं तदा चक्रं ततो नाक्षत्रमेव च ।
अन्यां दशां च संवीक्ष्य संवादमपि चिन्तयेत् ॥
मातापित्रोश्च निर्याणं पुत्रोत्पत्तिं तथैव च ।
आत्मनस्तु गुणान्दोषानेवमेव विचिन्तयेत् ॥
निर्याणन्तु ततो दृष्ट्वा स्थानं मन्दार्यभास्करान् ।
दशासंवादमालोक्य निर्याणं विलिखेद्बुधः ॥
अथवाऽहर्गणं चैव सद्देष्काणमिति स्फुटम् ।"
"स्फुरतु भुजगहारं मम हृदि तेजो हालाविषाहारम् ।
श्वेतशातिरशुभर्तं कृतारण्यविहारं श्वेतं शीतांशुशेखरम् ॥"

इति श्रीवराहमिहिरकृते बृहज्जातके दशाध्यायी ( नौका ) टीकायां दशमोऽध्यायः ॥ १० ॥

॥ समाप्तोऽयं ग्रन्थः ॥

---

पुस्तक मिलनेका ठिकाना—

खेमराज श्रीकृष्णदास,
अध्यक्ष "श्रीवेंकटेश्वर" स्टीम् प्रेस–बम्बई.

# क्रय्य पुस्तकें ( ज्योतिषग्रंथाः )

नाम. | की.
--- | ---

सूर्यसिद्धान्त–संस्कृत गूढार्थदीपिका सहित और बलदेवप्रसाद मिश्रकृत भाषाटीकासहित इसमें कालविभागादि ग्रहगतिका कारणादि पूर्वपश्चिमादिरेखानिर्णय स्पष्टचंद्र सूर्यादिछायाज्ञान चंद्रलम्बन सूर्यग्रहण परिलेख ग्रहदर्शन नक्षत्रस्थान उदयास्त-कालनिर्णय चन्द्रोदय पाताधिकार अध्यात्मविद्या गोलयंत्रादि कालनिर्णयादि बहुत विषयहैं .... .... ....

सिद्धान्तदैवज्ञविनोद–पंडित मनीरामविरचित संस्कृत भाषाटीका समेत इसमें मुहूर्तनिर्णय अमूर्तकालमीमांसा भूगोलखगो-लवर्णन सृष्ट्यादिअहर्गण मध्यमग्रहानयनविधि ग्रहोंके मन्दो-च्चानयन भौमादिका पातानयन ग्रहोंके क्रमसे स्फुटीकरण भौमादिकोंके पात स्पष्ट करनेकी विधि चन्द्र सूर्यग्रहण लानेकी विधि ग्रहयुद्धोदाहरण ग्रह और नक्षत्रके योग ग्रहउदयास्तविधि पञ्चाङ्ग बनानेकी विधि प्रतिवर्ष उपकरणसारिणी ग्रहकेनक्षत्र और राशिचार करनेकी विधि व्यगुभुज भागाक्षर सारणी आदि दरशायाहै, ज्योतिषीके लेनेयोग्यहै .... .... ....

परमसिद्धान्तज्योतिष–प्रेमवल्लभविरचित गणितभाग गोलज्ञान मध्य-माधिकार जीवनायक खेटस्पष्ट बालापक्रमानयन उदयास्त त्रिप्रश्नशृंगोन्नत्य ग्रहणाधिकार पातयोग यंत्राधिकार निश्चया-धिकार देशज्ञानादि विषय हैं .... .... ....

ग्रहलाघव–सान्वयभाषाटीका–गणेशदैवज्ञकृतमूल और पंडितरामस्व-रूपकृत अन्वय भाषाटीका और उदाहरण सहित ग्लेज ....

दीर्घवृत्तलक्षण–श्रीयुत महामहोपाध्याय पं० सुधाकरद्विवेदिनिर्मित

लीलावती–भास्कराचार्यकृत मूल और रामस्वरूपकृत भाषाटीका-सहित व्यक्तगणितमें अपूर्व है इससे सबप्रकारका गणित करसकेहैं ग्लेज .... ... .... ....

„ तथा रफ .... .... .... ....

गणितकुतूहल–सटीक उदाहरणसहित–व्रजराजीय गणितग्रंथ ....

| नाम. | की. रु. आ. |
|---|---|
| सिद्धान्तशिरोमणिः–अर्थात् गोलाध्याय भा.टीका सहित इस ग्रंथमें गोलाध्यायकी विवृति, गोलप्रशंसा, गोलस्वरूपप्रश्न, भुवनकोश, मध्यगतिवासना, स्फुटगतिवासना, गोलबंध, त्रिप्रश्नवासना, ग्रहणवासना, उदयास्तदृक्कर्म, शृङ्गोन्नतिवासना, यंत्राध्याय, ऋतुवर्णन, प्रश्नविचार, ज्योत्पत्तिः और ज्योत्पत्तिविवरण इत्यादि इतने विषय भलीप्रकारसे दिखलाये गयेहैं .... | १–४ |
| बृहज्जातक–भाषाटीकासहित–वराहमिहिराचार्यकृतमूल और पंडित-महीधरकृत भाषाटीकासहित । जिसमें राशिभेद ग्रहयोनिभेद वियोनिजन्म निषेक जन्मविधि अरिष्ट आयुर्दाय दशांतर्दशा अष्टकवर्ग कर्माजीव राजसयोग नाभसयोग चंद्रयोग द्विग्रहादि-योग प्रव्रज्या नक्षत्रफल राशिशील,दृष्टिफलाध्याय भावाध्याय आश्रययोग प्रकीर्ण अनिष्ट स्त्रीजातक नैर्याणिक नष्टजातक द्रेष्काण उपसंहाराध्यायादि विषयहैं ग्लेज कागज .... | १–४ |
| " तथा रफ कागज ... .... .... .... | १–० |
| बृहज्जातकसटीक–भट्टोत्पलीटीकासमेत उपरोक्त विषयानुसार ग्लेज | १–८ |
| " तथा रफ .... .... .... .... | १–४ |
| चक्रावलीसंग्रह सटीक–व्यवहारमें प्रायः जिन जिन वस्तुओंकी आव-श्यकता पडती है उन सबके ३९२ चक्र इसमें हैं । विष्णु-याग, शिवयाग, देवीयागादिके चक्र, वास्तुचक्र युद्धके अनेक अपूर्वचक्र इत्यादियोंके उद्धार तथा स्वरूप इसमें दिखाये गये हैं । इस अपूर्व पुस्तकको पास रखनेसे सभी चक्रोंका ज्ञान होजाताहै । .... .... .... .... | २–० |
| केशवीजातक–सान्वय सोदाहरण जगदीशत्रिपाठीकृत भाषाटीका-समेत जन्मपत्रिका बनानेमें अपूर्व गणितहै ग्लेज .... | १–८ |
| " तथा रफ.... .... .... .... | १–४ |
| सर्वार्थचिन्तामणि–पं० महीधरशर्माकृत भाषाटीका सहित–इस ग्रन्थके पढनेसे फलादेश भलीप्रकार कहसकते हैं ... | १–८ |
| लघुपाराशरी–भाषाटीका अन्वय सहित दशाप्रकरणमें उत्तम है | ०–२ |
| सर्वार्थचिन्तामणि–मूल भैरवदत्तप्रणीत जन्मपत्र और भाव लिखनेमें लाभदायकहै ... .... .... .... | ०–१० |

नाम. की.

मानसागरीपद्धतिः–मूल मानसागरप्रणीत इससे जन्मपत्र बनाना अतिसुगमहे ज्योतिषीके परमोपयोगी है .... ....

मानसागरी–भाषाटीका सम्पूर्ण जन्मपत्रबनानेका मास, तिथि, वार, नक्षत्र, योग, करण, द्विविग्रहयोग आदि सम्पूर्ण फलादेशादि वर्णित हैं ग्लेज .... .... .... ....

" " तथा रफ ... ... ... ....

मकरंदसारणी–उदाहरणसहित पञ्चांग बनानेवालोंको उपयोगी है

नष्टजन्मांगदीपिका–और पञ्चाङ्गदीपिका–गद्यपद्यटीकासमेत ऐसी उपयोगी कुञ्जी है जो हजारों रुपये खर्चसेभी अलभ्यथी

पत्रीमार्गदीपिका–और वर्षदीपक ( पं॰ महादेवविरचित मूल और श्रीनिवासकृत भाषाटीकासहित ) इस ग्रन्थसे भलीप्रकार जन्मपत्री और वर्षपत्री उत्तमरीतिसे थोडेही परिश्रमके गणितसे बनासक्ते हैं .... .... ....

" तथा मूल .... ... .... ... ....

ज्योतिषश्यामसंग्रह–पण्डितश्यामसुन्दर प्रणीत भाषाटीकासहित रफ तथा ग्लेज .... .... .... .... ....

जातकसंग्रहः–संगृहीत ग्रन्थ भावविचार फलादेशमें परमोपयोगीहे

चमत्कारचिन्तामणि–भा. टी. विद्यार्थियोंको अवश्य लेनाचाहिये

जातकालंकार–भाषाटीकासहित यथारुचिछंदोंमें रसिककाव्यबंधभाव और आयुः कहनेमें अपूर्व है .... .... ....

" " सटीक .... .... .... ....

जातकाभरण–मूल उपरोक्त विषयानुसारसामुद्रिकलक्षणाध्यायसमेत फलादेशमें उत्तमहे .... .... ... ....

जातकाभरण–पं॰श्यामलालजीकृत श्यामसुन्दरीभाषाटीका सहित गणकवर श्रीढुंढिराजजीका बनाया हुआ यह ग्रन्थ जन्मपत्री लिखने अथवा उसके फल कहनेमें अत्युपयोगी है स्थान स्थान पर कुण्डली भी दीगई हैं .... .... ....

बृहत्पाराशरहोराशास्त्र–पूर्वखण्ड सारांश उत्तरखंड संस्कृतटीका तथा भाषाटीकासहित दशाअन्तर्दशा ग्रहोंके पृथक् २ भाव-फलादेश इत्यादि अपूर्व हैं .... ... ....

| नाम. | की. रु. आ. |
| --- | --- |
| जैमिनीयसूत्र–सटीक चार अध्यायोंमें मारकादिस्थानादिनिर्णय इत्यादि जन्मपत्रका सम्पूर्ण फलहै .... .... .... | ०–६ |
| लघुजातक सटीक–योगानुयोगकहनेमें सुलभहै .... — .... | ०–५ |
| लघुजातक–भाषाटीकासमेत .... .... .... .... | ०–६ |
| आनन्दप्रकाश–भाषाटी० यह ग्रन्थ ज्योतिषियोंको परमोपयोगीहै, इसमें रोगकी स्थिति, असाध्यरोग किसप्रकार शांत होगा तथा रोगमुक्ति, स्नान दानादि कितनेंही उत्तम विषय लिखेगये हैं | ०–२ |
| बृहद्यवनजातक–पं०ज्वालाप्रसादकृत भाषाटीकासहित लग्नादिद्वादशभाव ग्रह नक्षत्र स्थानाधिपति,स्थानान्तर इत्यादिके फलादेश और सुखदुःख आयुः कहनेमें अत्युत्तमहै .... .... | १– |
| यवनजातकमूलमात्र–जन्मसमयके वार तिथि नक्षत्र योग करण कालोपदेश भलीभाँति वर्णित हैं .... .... .... | ०–२ |
| रत्नदीपक–छोटेसे ग्रन्थमें भावफलादेश अत्युत्तम लिखागयाहै .... | ०–३ |
| भृगुसंहितायोगावलीखण्ड–अनेक प्रकारके योग और उनके फल वर्णितहैं .... .... .... .... .... | २– |
| नुत्य ज ातक .... .... .... .... .... .... | १–४ |
| लग्नचंद्रिका–मूलमात्र .... .... .... .... | ०–४ |
| लग्नचंद्रिका–भाषाटीकासमेत इसमें सुगमरीतिसे जन्मकी तिथिवार नक्षत्रयोग और करणका फल संवत्सर उत्तरायण दक्षिणायनका फल ऋतु और मासफल सम्पूर्णग्रहोंका फल भावाध्याय एकग्रह आदि योग और विंशोत्तरी दशा इत्यादि जन्मपत्रका फल विचारहै .... .... .... .... .... | ०–१० |
| –पं० जीवनाथविरचित और पण्डित महीधरकृत भाषाटीकासहित इसमें संज्ञाध्याय अरिष्ट पित्रायारिष्ट अरिष्टभंग पुत्रभावविचार राजयोग सामुद्रिक स्त्रीजातकाध्याय स्त्रियोंका राजयोग प्रत्येक ग्रहोंका फल शयनादि द्वादशावस्थाविचार स्थानवशादवस्थाफल ग्रहोंकी प्रत्येकावस्थाका फल ग्रहोंकी बालादि अवस्था मारक राजयोग धनिकदरिद्र विचार राजयोग दरिद्रयोग द्वादशभावाध्याय दशानयन ग्रहका गर्वितादिभावादि विषय अपूर्व है .... .... .... | १– |